मनुश्च[१]

उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥

'उभयत्र' सूतकमृतकयोः । 'दशाह'ग्रहणमशौचकालोपलक्षणम् ।

छन्दोगपरिशिष्टे कात्यायनः [गोभिल., ३, ६०–६३]

सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैः ॥
अकृतं हावयेत्स्मार्ते तदभावे कृताकृतम् ।
हावयेदिति [२]किं तत्स्यादनारभ्य विधानतः ॥
कृतमोदन[३]सक्त्वादि तण्डुलादि कृताकृतम् ।
व्रीह्यादि चाकृतं प्रोक्तमिति हव्यं त्रिधा बुधैः ॥
सूतके च प्रवासे[४] च शक्तौ वा श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेद्धति योजयेत् ॥

'हावयेदिति किं' इत्यादि—हावयेदिति यद्गृहानारभ्य विहितं किं तस्य विषय इति प्रश्नपूर्वकविषयविशेषमाह–'सूतके च प्रवासे' इत्यादिना ॥

(१) मनुरिति पराशरमाधवीये च । मुद्रितमनुस्मृतौ न लब्धः । यम इति मित्रमिश्रः

(२) 'कृतं वा हावयेदन्नं' इति मुद्रितपरिशिष्टे । किंचित्स्यादनारभ्य—अ.

(३) सर्गाति = उ; सत्तवादि—अ; तण्डुलादि—मु. परि.

(४) आसक्तौ—उ; अशक्तौ—अ; शक्तौ—मु. परि.

पारस्करः [ ३, १०, ३१-३४ ]

[1]न स्वाध्यायमधीयीरन् । नित्यानि निवर्तेरन् वैतानवर्जम् । शालाग्नौ चेत्येके ।। अन्य एतानि कुर्युः ॥

'वैतानं' श्रौताग्निकर्म । 'शालाग्नौ' स्मार्ताग्नौ, तद्वर्जयित्वा 'एके' आचार्याः शालाग्नौ च निवृत्तिमिच्छन्ति । 'एके' इति वचनादेकेन यदा निवृत्तिस्तदा 'अन्य एतानि कुर्युः' न स्वयमिति कर्कः ॥

यमः

सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ।
एकादशेऽह्नि कुर्वीत दानमध्ययनं तपः ॥
त्रेधा धर्मोपरोधानुसारिणास्मै तदुच्यते ।
अरणीसंभवो वह्निर्दहेत्पापं सदा कृतः ॥

'सूतके तु कुलस्यान्नमदोषं' इति—सूतकिनो दानं विना त्रेधा धर्मोपरोधे सति तन्निवृत्त्यर्थमुच्यते । अत एव हेतोः 'अरणीसंभवो वह्निः' इत्यादिनोक्तः ॥

(१) स्वाध्यायं' वेदं न पठेयुः न चाध्यापयेयुः यावदेषामाशौचम् । 'नित्यानि' आवश्यकानि सन्ध्यावन्दनादीनि 'निवर्तेरन्' अनधिकारान्न प्रवर्तन्ते । कथं? 'वैतानवर्जम्' । वितानो गार्हपत्याहवनीयदक्षिणाग्नीनां विस्तारः । तत्र साध्यं अग्निहोत्रादिकर्म, तद्वैतानं तद्वर्जयित्वाऽन्यन्निवर्तत इत्यर्थः । शालाग्निरावसथ्याग्निः, तत्र साध्यानि सायंप्रातर्होमस्थालीपाकादीनि । तानि वर्जयित्वा नित्यानि निवर्तेरन् इत्येके आचार्या मन्यन्ते । तस्मिन्पक्षे न स्वयं कुर्युः । किं तु अन्येन कारयेयुः । गृह्यकारपक्षे न कुर्यान्न कारयेयुः [जयरामवृत्तिः]

**मनुः** [५, ८४]

> न वर्धयेदघाहानि प्रत्यूहेन्नाग्निषु क्रियाम् ।
> न च तत्कर्म कुर्वाणः सनाभ्योऽप्यशुचिर्भवेत् ॥

'न वर्धयेदघाहानि' इति—यस्य वृत्ताद्यपेक्षयाऽऽशौचसंकोचः स निष्कर्मा सुखमासिष्यत इति बुद्ध्याऽऽशौचदिनानि न वर्धयेदित्यर्थः ॥

'प्रत्यूहो' निरासः । 'न च' इत्यादि—यथाऽग्निकर्म कुर्वाणो यजमानोऽशुचिर्न भवति, एवं सनाभ्योऽपि तत्कर्मकरणे नाशुचिरित्यर्थः ॥[१]

**जाबालिः**

> जन्महानौ वितानस्य कर्मत्यागो न विद्यते ।
> शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैः ॥

> उभयत्र दशाहानि सपिण्डानामशौचकम् ।
> स्नानोपस्पर्शनाभ्यासादग्निहोत्रार्थमर्हति ॥

(१) अन्ये त्वाहुः—अतीतेष्वप्यहस्सु यावत् स्नानादिक्रिया न कृता तावन्नैव शुद्धिः । तत्राशुचित्वादननुष्ठाने न दुष्यतीति स्नानादिषु शुद्धये न प्रवर्तते । तत्रैवोच्यते 'न वर्धये'न्नातीतेष्वहस्सु बाह्याशौचे विलम्बितव्यम् । 'प्रत्यूहो' निरासः, अननुष्ठानम् ॥ (मेधातिथिः)

# अथ वर्णसन्निपाताशौचम्

तत्र दक्षः

वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः ।
दशाहषट्‌त्र्यहैकाहाः प्रसवे सूतकं भवेत् ॥

हारीतः

शुद्ध्येद्विप्रो दशाहेन जन्महान्योः स्वयोनिषु ।
सप्तपञ्चत्रिरात्रैस्तु क्षत्रविट्‌शूद्रयोनिषु ॥

विष्णुः [२२, २२–२४]

ब्राह्मणस्य क्षत्रियवैश्यशूद्रेषु सपिण्डेषु षड्रात्रत्रिरात्रैकरात्रैः । क्षत्रियस्य विट्‌शूद्रयोः षड्रात्रत्रिरात्राभ्याम् । वैश्यस्य शूद्रेषु षड्रात्रेण ॥

ब्रह्मपुराणम्

बान्धवेषु च विप्रस्य क्षत्रविट्‌शूद्रजातिषु ।
मृतेषु चाथ जातेषु दशाहाच्छुद्धिरिष्यते ॥

देशधर्मप्रमाणत्वात् षड्रात्रं क्षत्रियेष्वथ ।
त्रिरात्रमपि वैश्येषु शूद्रेष्वेकाहमेव च ॥

क्षत्रियस्याथ वैश्यस्तु वैश्यस्य वृषलस्तथा ।
म्रियते जायते बन्धुस्तत्राशौचं [1]स्वकं चरेत् ॥

शूद्रा वैश्याः क्षत्रियास्तु क्रमादुत्तमजातिषु ।
बान्धवेषु चरन्त्यत्र यत्संख्यं तेषु विद्यते ॥

शङ्खः [ १८, १७–२० ]

एकरात्रं त्रिरात्रं वा षड्रात्रं मासमेव च ।
शूद्रे सपिण्डे वर्णानामाशौचं क्रमतः स्मृतम् ॥

त्रिरात्रमथ षड्रात्रं पक्षं मासं तथैव च ।
वैश्ये सपिण्डे वर्णानामाशौचं क्रमतः स्मृतम् ॥

सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य तु ।
वर्णानां परिशेषाणां द्वादशाहेन निर्दिशेत् ॥

सपिण्डे ब्राह्मणे वर्णाः सर्व एवाविशेषतः ।
दशरात्रेण शुद्ध्येयुरित्याह भगवान् यमः ॥

अङ्गिराः

असवर्णस्त्रियः पुत्रा द्विजानां परिकीर्तिताः ।
पृथग्धर्मसमाचाराः पृथक्शौचाः प्रकीर्तिताः ॥

शूद्रापुत्रः पारशवः ब्राह्मणोत्पादितस्तु यः ।
शूद्राचारेण तस्यापि शौचाशौचं विधीयते ॥

(१) स्वसंकरे—अ, उ.

शङ्खलिखितौ

यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्गृहाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

जाबालिः

नानाजातिषु पारक्ये पैतृकं जीवतः पितुः ।
अतीते मातृकं विद्यात् पारक्यमुभयोरपि ॥

विष्णुः [२२, १९-२१]

पत्नीनां दासानामानुलोम्येन स्वामितुल्यमाशौचम् । मृते स्वामिन्यात्मीयम् । हीनवर्णानामधिकवर्णेषु सपिण्डेषु तदाशौचव्यपगमे शुद्धिः ॥

बृहस्पतिः [आशौ., ३५]

दासान्तेवासिभृतकाः शिष्याश्चैकत्र वासिनः ।
स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके ॥

शङ्खः

हीनवर्णा तु या साध्वी प्रमादात्प्रसवं व्रजेत् ।
प्रसवे मरणे तज्जन्मशौचं नोपशाम्यति ॥

इति वर्णसन्निपाताशौचम् ॥

---

# अथाऽऽशौचसन्निपाताशौचम्



तत्र मनुः [५, ७९]

अन्तर्दशाहे[१] स्यातां चेत् पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रो [२]यावत्तत्स्यादनिर्दशम् ॥[३]

याज्ञवल्क्यः [३, २०]

अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यति ॥

बौधायनः [१, ११, १५–१६]

जननमरणयोः संनिपाते समाने तु दशरात्रम् । [अथ] यदि दशरात्राःसंनिपतेयुराद्यं दशरात्रमाशौचमानवमाद्दिवसात् ॥[४]

(१) 'चेत्स्यातां' इति मेधातिथिपाठः ।

(२) 'यावन्न स्यात्' इति मूलमातृकादत्तपाठः । स एव राघवानन्देन स्वीकृतश्च ।

(३) अत्रापि दशग्रहणमाशौचकालोपलक्षणार्थम् । यस्य चाशौचकालः तस्मिन् न निवृत्ते यदि पुनरन्यदाशौचनिमित्तमुत्पद्यते तदा पूर्वशेषेणैव शुद्धिः, न त्वन्तरानिपतितं यत्तदीयादह्नः प्रभृति दशाहादिगणना कर्तव्या । 'पुनः'शब्दश्च समानजातीयापेक्षया समर्थतरो भवति । विप्रग्रहणमप्याशौचानामुपलक्षणार्थम् । (मेधातिथिः) ॥ कुल्लूकस्तु 'दशाहादिमध्ये यदि पुनः मरणे मरणं जनने जननं स्यात्' इत्याह ॥

(४) 'सन्निपातः' समवायः । अन्यतरेण निमित्तेन दशाहे वर्तमाने इतरस्यापि निमित्तस्य तत्राऽन्तःपातः । तथा चेत् पूर्वाशौचप्रयुक्ततन्त्रमध्यपातित्वादेतत्प्रसजति, न पृथक् दशरात्रं प्रयुङ्क्ते इत्यभिप्रायः । एवं व्याधिष्वपि । तत्र भूयसा सहाऽल्पीयो गच्छति न त्वल्पीयसा भूयः । तत्र सजातीयस्यैव प्रसङ्ग इति केचित् । तस्मात् जनने जननं मरणे मरणमिति निवेशः सिद्धो भवति । आचार्यस्त्वनादृत्य तच्छब्दं जननमरणयोरिति वदन् विजातीयस्यापि प्रसङ्गं मन्यते ॥ (गोविन्दस्वामी)

शङ्खलिखितौ

अथ चेदन्तरा प्रमीयेत जायेत वाऽवशिष्टैरेव दिवसैः शुद्ध्येत्। अहःशेषे द्वाभ्याम्। प्रभाते तिसृभिः॥

गौतमः [१४, ६–८]

तच्चेदन्तः पुन[1]रापतेच्छेषेण शुद्ध्येरन्। रात्रिशेषे द्वाभ्याम्। प्रभाते दिनत्रयेण। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्॥

विष्णुः [२२, ३५–३७]

जननाशौचमध्ये यद्यपरं जननं स्यात् तदा पूर्वाशौचव्यपगमेन शुद्धिः। रात्रिशेषे दिनद्वयेन। प्रभाते दिनत्रयेण। मरणाशौचमध्ये ज्ञातिमरणेऽप्येवम्॥

अङ्गिराः

सूतके सूतकं भूयो यदि तत्स्यादनिर्दशे।
तच्छेषेणैव शुद्धिः स्यान्मृतके सूतकं तथा॥

अनिर्दशाहे जनने पश्चात्स्यान्मरणं यदि।
प्रेतमुद्दिश्य कर्तव्यं तत्राशौचं स्वबन्धुभिः॥

(१) 'आपतेत्' आगच्छेत्। यदि स्वल्पप्रमाणके [अशौचे] महत्प्रमाणमागच्छति तत्पूर्वेण नागच्छेत्॥ (मस्करी)

देवलः

परतः परतः शुद्धिरघवृद्धौ विधीयते ।
स्याच्चेत्पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते ॥

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥

शङ्खः

समानं खलु शौचं तु प्रथमेन समापयेत् ।
असमानं द्वितीयेन धर्मराजवचो यथा ॥

यमः

अघवृद्धावशौचं च पश्चिमेन समापयेत् ॥

ब्रह्मपुराणे

आद्यभागद्वयं यावत् सूतकस्य तु सूतके ।
द्वितीये पतिते चाद्यात् सूतकाच्छुद्धिरिष्यते ॥
अत ऊर्ध्वं द्वितीयात्तु सूतकाच्छुचिरिष्यते ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥
मृतकस्यान्तरे यद्यत् सूतकं प्रतिपद्यते ।
सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते ॥
मृतकान्ते भवेत्तत्र चातुर्वर्ण्येषु नित्यशः ॥

# अथ विदेशस्थाशौचम्

तत्र बृहस्पतिः [आशौ., ३६, ६२]

संनिधानेऽशौचमिदं [1]सारांशं परिकीर्तितम् ।
दूरदेशे मृते जाते सद्यः शौचमुदाहृतम् ॥
[2]अन्यदेशे मृतं ज्ञातिं श्रुत्वा वा पुत्रजन्म च ।
[3]अनिर्गते दशाहे तु शेषाहोभिर्विशुद्ध्यति ॥

पारस्करः [३, १०, ४४-४५]

प्रोषितश्चेत् प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन् । अतीतश्चेदेकरात्रं त्रिरात्रं वा[4] ।

(१) ज्ञावं संपरिकीर्तितम्—अ; आ; स्मृतिचं., p. 48..

(२) 'अन्यदेशमृतं ज्ञातिं श्रुत्वा पुत्रस्य जन्म च' इति शुद्धिकौमुदी (पृ- ३४), स्मृतिचन्द्रिका [आशौचकाण्डे] च [p. 47].

(३) 'अनिर्गतदशाहन्तु' इति स्मृतिचन्द्रिकापाठः.

(४) 'प्रोषितः' प्रवासं गतः यदि 'प्रेयात्' म्रियते तदा पुत्रादयः तन्मरणश्रवणकालमारभ्य 'कृतं' दत्तं स्नानपूर्वकमुक्तविधिना 'उदकं' यैस्ते 'कृतोदकाः', 'कालशेषं' आशौचसमशेषं 'आसीरन्' आशौचधर्मेण वर्तेरन् । यद्यप्याशौचकालोऽतीतः, ततः प्रोषितमरणं च श्रुतं, तदेकरात्रमाशौचं त्रिरात्रं वा । अत्र यद्यपि सामान्येनोक्तस्तथाऽपि स्मृत्यन्तराद्विशेषोऽत्रगन्तव्यः । कथम् ?

मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी भवेत् ।
अहस्तु नवमादर्वाक् सद्यश्शौचमतः परम् ॥ [जयरामः]

**मनुः** [५, ७५–७८]

विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् ।
यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥

[१] अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत् ।
संवत्सरे व्यतीते तु स्पृष्ट्वैवाऽपो विशुध्यति ॥

निर्दशं[२] ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥

'विगतं' विनष्टम् । 'अनिर्दशं' अनिर्गतदशाहे ।

[३] **याज्ञवल्क्यः** [३, २१]

प्रोषिते कालशेषः[४] स्यात् पूर्णे [५]दत्वोदकं शुचिः ॥

**वसिष्ठः** [३, ३६]

देशान्तरस्थे प्रेते ऊर्ध्वं दशाहाच्छ्रुत्वैकरात्रमाशौचम् ।

**गौतमः** [१४, १८]

श्रुत्वा चोर्ध्वं दशम्याः पक्षिणीम् ॥[६]

सूतकसम्बन्ध'दशमी' अत्र रात्रिः । 'पक्षिणी' आगामिवर्तमानाहर्युक्ता रात्रिः ।

(१) Omitted by आ.

(२) 'याति मरणं' इति उ, आ ; 'ज्ञाति'—अ, मुद्रितकोशाः

(३) The citations from याज्ञवल्क्य, वसिष्ठ and गौतम are missing in the Udaipur manuscript.

(४) 'कालशेषं' इति मूलमातृका. (५) 'दत्तोदकं'—उ.

(६) दशमीग्रहणं सर्वाशौचप्रदर्शनार्थम् । 'पक्षिणी' अहर्द्वयमध्यगता रात्रिः, रात्रिद्वयमध्यगतमहर्वा । (मस्करी)

विष्णुः [२२, ३७–४१]

श्रुत्वा देशान्तरस्थो जन्ममरणे आशौचशेषेण शुध्येत्। व्यतीते त्वशौचे संवत्सरस्यान्तं त्वेकरात्रेण। [१]अतःपरं स्नानेन॥

जाबालः

अतीते सूतके स्वे स्वे त्रिरात्रं स्यात्तु सूतकम्।
संवत्सरे व्यतीते तु सद्यः शौचं विधीयते॥

देवलः

[२]आशौचाहस्स्वतीतेषु [३]बन्धुश्चेच्छ्रूयते मृतः।
तत्र त्रिरात्रमाशौचं भवेत्संवत्सरान्तरे॥
[४]ऊर्ध्वं संवत्सराधार्त्तु श्रूयते चेन्मृतो जनः।
भवेदेकाहमेवात्र तच्च संन्यासिनां न तु॥[५]
नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि।

'संवत्सरान्तरे' वर्षाभ्यन्तरे। अत्रेयं व्यवस्था—षण्मासाभ्यन्तरे ज्ञातिमरणश्रवणे त्रिरात्रमाशौचम्। तदूर्ध्वं मासत्रयं वा यावत् पक्षिणी। तदूर्ध्वं मासत्रयं यावदेकरात्रम्। अतः परं स्नानोदकदानमात्रम्॥

(१) 'ततः परं' इति वैजयन्तीपाठः

(२) 'अद्याहस्सु व्यतीतेषु' इति शुद्धिकौमुदीपाठः, (पृ. ३५)

(३) 'ज्ञातिश्चेत्'—शु. कौ....

(४) 'ऊर्ध्वं संवत्सरादाद्याद्बन्धुश्चेच्छ्रूयते मृतः' इति शुद्धिकौमुदी (पृ. ३७)

(५) *S'uddhikaumudī* (p. 35) follows the s'loka with this half-verse—

बन्धुर्माता पिता चैव स्त्रीणां च पतिरेव च।

# अथ बालाद्याशौचम्

* तत्र शङ्खलिखितौ

देशान्तरिते बाले चातीते सद्यःशौचम् । यद्यूनद्विवर्षं स्यादनुत्पन्नदशन इत्येके ॥

* पैठीनसिः

देशान्तरमृतस्य सद्यःशौचम् ॥

* वैवस्वत आह—

बाले चादन्तजाते त्रिरात्रं शावमाशौचम् । सद्यःशौचमिति गौतमः ॥

मनुः [५, ७८, ६८][१]

बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते ।
सवासा जलमाप्लुत्य सद्य एव विशुध्यति ॥

* There is a lacuna in उ and अ up to the quotation from Manu ; आ fills the gap.

(१) Nandana gives the two verses in the order of the text. In printed editions of *Manusmṛti*, the first s'loka comes after ten intervening s'lokas after the second. See Jolly, (p. 304.)

नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।
निर्वृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥

'बालो'ऽत्र अजातदन्तः । 'पृथक्पिण्डो'ऽत्र समानोदकः ।

यमः

ऊनत्रिवार्षिके बाले प्रेतत्वमनुगच्छति ।
अदन्तजाते तनये शिशौ गर्भच्युते तथा ॥
निर्वृत्तचूडके बाले देशान्तरमथो गते ।
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥

याज्ञवल्क्यः [३, २३]

आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रतादेशाद् दशरात्रमतःपरम् ॥

जाबालः

व्रतचूडा द्विजानां तु प्रमीतेषु यथाक्रमम् ।
दशाहत्र्यहैकाहोभिः शुध्यन्त्यपि हि निर्गुणाः ॥
'व्रतं' उपनयनम् ।[१]

विष्णुः [२२, २७–३१]

अदन्तजाते बाले प्रेते सद्य एव । नास्याग्निसंस्कारो नोदकक्रिया । दन्तजाते त्वकृतचूडे त्वहोरात्रेण । कृतचूडे [तु] असंस्कृते त्रिरात्रेण । अतः परं यथोक्तकालेन ॥

(१) Omitted by उ.

**शङ्खः**

अजातदन्ते बाले तु सद्यःशौचं विधीयते ।
अहोरात्रात्तथा शुद्धिर्बाले त्वकृतचूडके ॥
तथैवानुपनीते तु त्र्यहाच्छुध्यन्ति बान्धवाः ।
अत्र 'अजातदन्तादयः' स्वकीयकालोपलक्षकाः ।

**पैठीनसिः**

अकृतचूडानां त्रिरात्रम् ॥

**वसिष्ठः**[१] [४, ३४-३५]

ऊनद्विवर्षे प्रेते गर्भपतने वा सपिण्डानां त्रिरात्रमशौचम् । सद्यःशौचमिति गौतमः ॥

अत्र दाहादाहकृतो विषयविभागो यथा—

[२] **अङ्गिराः**

अजातस्य तु तावत्स्यादशौचं संस्थितस्य तु ।
यावत् स्नानं न कुर्वन्ति सचैलं बान्धवा बहिः ॥

यद्यप्यकृतचूडश्चाजातदन्तश्च संस्थितः ।
तथापि दाहयेदेतमशौचं त्र्यहमाचरेत् ॥

'अजातो' अजातदन्तः ।

(१) 'ठ' मातृकायां 'वसिष्ठः' इति नास्ति ।
(२) Manuscripts corrupt ; text restored.

पारस्करः [३, १०, २-६]

अद्विवर्षे प्रेते मातापित्रोराशौचम् । [शौचमेवेतरेषाम्][१] । एकरात्रं त्रिरात्रं वा । शरीरमदग्ध्वा निखनन्ति । अन्तःसूतके चेदोत्थानादाशौचं सूतकवत् ॥[२]

ब्रह्मपुराणे

अनतीतद्विवर्षन्तु मृतं भूमौ निधापयेत् ।
द्विरात्रं[३] बान्धवानां च तस्याशौचं च सर्वशः ॥

अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते ।
अतिमोहादिभूतैश्च [४]देशसावर्ण्यमार्दवात् ॥

अशौचं ब्राह्मणानां तु त्रिरात्रं [५]न तु विद्यते ।
राज्ञामेकादशाहं तु वैश्यानां द्वादशाह्निकम् ॥

(१) Omitted by उ and अ ; इतरस्मिन् एकरात्रम्—इति आ.

(२) ऊनद्विवर्षस्य प्रेतस्य 'शरीरं' कुणपं 'अदग्ध्वा' अग्निदाहमकृत्वा 'निखनन्ति' गर्ते प्रक्षिपन्ति । 'अन्तः' मध्ये 'सूतके' जननिमित्ताशौचे 'उत्थानात्' उत्थानं सूतकान्ते यावदाशौचं जननाशौचान्तरं आपतति तदा सूतकवत् । एवं मरणाशौचमध्ये यदा मरणाशौचमेवापतति तदाऽपि पूर्वशेषेणैव उत्तरस्य शुद्धिः । एतच्च सपिण्डविषयम् । मातापित्रोस्तु विशेषः । मातरि पूर्वमृतायां यथाशौचमध्ये पिता म्रियेत तदा पितृमरणनिमित्ताशौचान्ते शुद्धिः । यदा पुनः पितरि मृते माता म्रियते तदा पक्षिण्यन्ते द्वादशाहप्रहारान्ते शुद्धिः । किं च यदि सूतके रात्रिमात्रावशिष्टे सूतकान्तरमापद्येत तदा द्व्यहमधिकं शावं वर्धते । यदि पुनर्याममात्रावशिष्टे सूतके शावे वा सूतकं शावं वा सजातीयं आपतति त्र्यहमधिकं वर्धते ॥ (हरिहरवृत्तिः)

(३) त्रिरात्रं—अ.

(४) देशसाधर्म्यमार्द्रवात्—अ.

(५) न च—अ.

अपि विंशतिरात्रं तु शूद्राणां च भवेत्क्रमात् ।
अनुपनीतो विप्रस्तु राजा चैव धनुर्ग्रहात् ॥

अगृहीतप्रतोदश्च वैश्यः शूद्रश्च वस्त्रयुक् ।
म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव हि ॥

द्विजन्मनामयं कालस्त्रयाणां तु षडब्दिकः ।
पञ्चाब्दिकं तु शूद्राणां स्वजात्युक्तमतः परम् ॥

---

# अथ स्त्र्याशौचम्

तत्र 'त्र्यहाच्छुध्यन्ति बान्धवा' इत्यनुवृत्तौ

शङ्खः

अनूढानां तु कन्यानां वैश्यशूद्रद्विजन्मनाम्[१] ।
अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम् ॥
मृत्युं समधिगच्छेत्तु मासं तस्यापि बान्धवाः ।
शुद्धिं समधिगच्छन्ति नात्र कार्या विचारणा ॥

तथा

गृहे मृतासु दत्तासु कन्यकासु त्र्यहं तथा ।

मनुः [५, ७२]

स्त्रीणामसंस्कृतानां तु त्र्यहाच्छुध्यन्ति बान्धवाः ।
यथोक्तेनैव कल्पेन शुध्यन्ति तु सनाभयः ॥[२]

'असंस्कृतानां' वाग्दत्तानां अकृतविवाहानाम् । 'बान्धवाः' भर्तृसपिण्डाः । 'सनाभयः' पितृसपिण्डाः ।

(१) तथा वै शूद्रजन्मनाम्—अ, आ.

(२) 'अन्यैस्तूक्तम्—सोदर्या दशरात्रेण इति । तेषां चाभिप्रायः । अष्टवर्षायाः कन्याया दानं विहितम् । दत्तायाश्च निर्वृत्तचौडकव्यपदेशाभावात् पुंस इव उपनीत्य, तदानीं कल्पान्तरस्यानाम्नानात् दशाह एव युक्तः ॥ (मेधातिथिः)

याज्ञवल्क्यः [३, २४]

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ॥[१]

विष्णुः [२२, ३२–३४]

स्त्रीणां विवाहः संस्कारः । संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे । तत्प्रसवमरणे चेत् पितृगृहे [२]भवेतां तदैकरात्रं त्रिरात्रं वा ॥

शङ्खलिखितौ

एकाहं कन्यायामूढायां गोत्रतः पिण्डाशौचयोर्निवृत्तिः ॥

वसिष्ठः [४, १९]

प्रत्तानामितरे [३]कुर्युस्ताश्च तेषाम् ॥

पैठीनसिः

दत्ता कन्या परैव भवति ॥

शङ्खः

पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता ।
तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति ॥

(१) अत्र व्याख्यातारः पञ्चदशाब्ददेशीयाऽपि या ह्यदत्ता कन्या तिष्ठेत्तदहरेवाशौचम् । मुख्यमाम्नानमतिक्रम्य कालक्षपणे प्रमाणाभावात् ॥ (मेधातिथिः)

(२) 'स्यातां' इति मु. पा.

(३) 'कुर्वीरन्' इति मु. पा.

ब्रह्मपुराणे[1]

दत्ता नारी पितुर्गेहे [ऽप्रधाने] सूयते [सदा] म्रियतेऽथवा ।
स्वमशौचं चरेत्सम्यक् पृथक् स्थाने व्यवस्थिता ॥[2]
आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते ।
सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
अतः परं प्रवृद्धानां त्रिरात्रमिति निश्चयः ॥
वाक्प्रदाने कृते तत्र ज्ञेयं चोभयतस्त्र्यहम् ।
पितुर्वरस्य च ततो दत्तानां भर्तुरेव हि ॥

(१) 'आदिपुराणे' इति शुद्धिप्रकाशे (पृ. २७) ।

(२) 'पितुर्गृहे' यदा सूयते म्रियते वा 'दत्ता नारी' सा प्रसवे पैठीनस्युक्तमाशौचं चरेत् । 'पृथक् स्थाने' पित्रादिसंसर्गशून्ये पितृगृहे स्थिता सा चेत्तदा तद्बन्धुवर्गो गोत्रादिः एकाहेन, जनकः त्र्यहेण शुध्यति । जनकत्वाविशेषात् जनन्यपि । संसर्गे पित्रादेः संपूर्णमाशौचम् ।

यस्तैः सहासनं कुर्यात् शयनादीनि चैव हि ।
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥

इति वचनादिति स्मार्ताः । एतन्मते 'दत्ता नारी पितुर्गेहेऽप्रधाने सूयते यदा' इति कल्पतर्वादृतवाक्ये 'अप्रधाने' पित्रादिसंसर्गशून्ये इत्यर्थो बोध्यः ॥ [शुद्धिप्रकाशे, २७] ॥ गोविन्दानन्दविरचित—शुद्धिकौमुद्यां [पृ. ३३]—"तथा च कल्पतरुलिखितव्यासवचनम्—

दत्ता नारी पितुर्गेहेऽप्रधाने सूयते यदा ।
म्रियते वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैः ॥"

इति स्पृश्यशौचप्रकरणे दृश्यते । अत्र प्रकरणे पुनस्तद्वचनं यस्यां कस्यांचित् मातृकायामपि नोपलभ्यते । कल्पतर्वादृतपुराणश्लोकश्च गोविन्दानन्देनादृतो व्याख्यातश्च ॥

स्वजात्युक्तमशौचं स्यात् सूतके मृतकेऽपि वा ।
पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता ॥
यं यं श्रितवती भूयस्तस्याशौचं भवेत् त्र्यहम् ।
मृतायां वा प्रसूतायां [1]नान्येषामिति निश्चयः ॥
दत्ते तु सप्तमे यत्र बाला काचित् कृता[2] भवेत् ।
स्वामिगोत्रं भवेत्तस्यास्तच्च भूयो विशिष्यते ॥
पैतृकं त्वप्रसूतायां ततः पौर्विकभर्तृकम् ।
कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता ॥
तस्यान्यस्य सगोत्रा स्याद्यं संश्रितवती स्वयम् ॥

---

(१) 'बान्येषां' इति अ.

(२) काचिद्धृता—आ.

# अथ गर्भस्रावाशौचम्

**अत्र मनुः** [७, ६६]

**रात्रिभिर्मासतुल्याभिर्गर्भस्रावे विशुध्यति ।**
**रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥**[१]

**हारीतः** [अ. १९]

**गर्भपतने [स्त्रीणां] त्रिरात्रम् । साधीयो रजोविशेषत्वात् । जातमृते मृतजाते वा दशाहादि कुलस्य ॥**[२]

**शङ्खलिखितौ,**

**गर्भमाससमा रात्री स्रंसने गर्भस्य । त्र्यहं वा । सर्वेषां सकुलानाम् ॥**

(१) अप्राप्तकालस्य पातः 'स्राव' उच्यते । सप्तमास्याश्च जीवन्ति । अतः सप्तमे मासे पूर्णमाशौचम् । एतत्तु जीवतो जातस्य युक्तं, अन्यथा तु गर्भमाससमा इत्येव । इह रजस्वलाया रजस्युपरते स्नानेन शुद्धिराम्नाता । स्मृत्यन्तरे त्र्यहादूर्ध्वम् । तत्रैवं व्यवस्था । प्राक् त्र्यहाद्रजोनिवृत्तावपि नास्ति शुद्धिरूर्ध्वमनुपरतेऽपि भवति । किं तु 'विशुध्यतीति' प्रकृते पुनः 'साध्वी'ति वचनात् अनिवृत्ते रजसि वैदिककर्माधिकारानुप्रवेशो नास्ति, न पुनः स्पर्शादेर्निषेधः । 'स्त्री'ग्रहणं वर्णमात्रस्यर्थम् ॥ (मेधातिथिः)

(२) "गर्भस्रावे स्त्रीणां त्रिरात्रं साधीयो रजोविशेषत्वात् ।" इति कुल्लूकोदाहृतहारीतवचनम् [५. ६६]. Text corrupt; restored form शुद्धिकौमुदी, ४७.

शातातपः

गर्भसंस्रवणे त्रिरात्रम्। यावन्तो मासास्तावन्त्यहानीति ॥

'शुद्धिः' इत्यनुवृत्तौ—

विष्णुः [२२, २७]

मासतुल्यैरहोरात्रैर्गर्भस्रावे ॥

जाबालः

रात्रयो मासतुल्याः स्युर्जनन्या गर्भविस्रवे ॥

सुमन्तुः

गर्भमासतुल्या दिवसा गर्भस्रंसने। सद्यः शौचं वा भवति ॥[१]

[कूर्मपुराणे][२]

षण्मासाभ्यन्तरं यावद् गर्भस्रावो भवेद्यदि।
तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते ॥
अत ऊर्ध्वं स्वजात्युक्तं तासामाशौचमिष्यते।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ॥

[आदिपुराणे][३]

स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथवा।
अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः[४]।
वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तंतु[५] काष्ठवत् ॥
खनित्वा शनकैर्भूमौ सद्यःशौचंःविधीयते ॥

(१) कुल्लूकः [७, ६६].　(२) कूर्मपुराणे इति शुद्धिप्रकाशे (पृ. १८).

(३) आदिपुराणे इति शुद्धिकौमुद्याम् [पृ. ४५].

(४) 'गतैव हि' इति उ, अ, आ.　(५) 'क्षिपेत् तत्तु' इति अ.

# अथ मृत्युविशेषाशौचम्

तत्र 'सद्यःशौचं विधीयते' इत्यनुवृत्तौ—

**मनुः** [५, ९५]

डिम्बाहवे हतानां च विद्युता पार्थिवेन च ।
गोब्राह्मणस्य चैवार्थे यस्य चेच्छति पार्थिवः ॥[१]

**तथा** [५, ९८]

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च ।
सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्मृतम्[२] ॥

[३]'डिम्बो' अशस्त्रकलहः संमर्दो वा ।

**यमः**

डिम्बाशनिहतानां च तथैव प्राणसत्रिणाम् ।
नदीश्वापददंष्ट्रिभ्यः सद्यःशौचं विधीयते ॥

(१) 'डिम्बो' बहुजनसंकुलः अशस्त्रकलहो वा । 'आहवः' संग्रामो युद्धम् । 'यस्य चेच्छति पार्थिवः' स्वकार्यार्थपरिपालनाधिकृतस्य ॥ (मेधातिथिः)

(२) 'स्थितिः' इति मेधातिथिप्रभृतीनामादृतः पाठः ।

(३) येन शस्यते हन्यते तत् 'शस्त्रम्' । अतः पाषाणलगुडादिनापि हतस्य यज्ञसंस्था निष्पद्यते, नायुधैरेव खड्गादिभिः । अत्र केचित् 'क्षत्रधर्महतस्य' इत्यनेन 'सद्य' इत्यभिसंबध्नन्ति । ततश्च यः सङ्ग्रामभूमौ मृतस्तस्यैवायं विधिः, न तु योऽन्येद्युस्ततोऽन्यत्र गतः । तदेतद्विचार्यम् ॥ (मेधातिथिः)

शस्त्रेणाभिमुखो यस्तु [1]युध्यते शस्त्रधर्मणा ।
यज्ञः [2]संसिध्यतेतस्य सद्यःशौचं विधीयते ॥
[3]अग्नि[4]मेरुप्रपतने वीराध्वन्यप्यनाशके ।
दीक्षितानां च सर्वेषां सद्यःशौचं विधीयते ॥

बृहस्पतिः [आशौ., ४९]

[5]डिम्बाहते विद्युता च राज्ञा गोविप्रपालने ।
सद्यःशौचं हतस्याहुः त्र्यहं चान्ये महर्षयः ॥[6]

पराशरः

ब्राह्मणार्थं विपन्नानां [7]दण्डिनां गोग्रहेषु च ।
आहवेषु विपन्नानामेकरात्रमशौचकम् ॥

(१) 'वध्यते' इति शुद्धिप्रकाशपाठः; (५३) 'अ' च.

(२) 'सन्तिष्ठते' इति शु. प्रकाशे.

(३) Supplied by आ only, and शु. प्र.

(४) 'मरु' इति शु. प्र. 'मरुः' निर्जलप्रदेशः । 'मेरु' इति पाठं स्वीकृत्य उच्चप्रदेश इत्यर्थ इत्यन्ये । 'वीराध्वनि' मरणं संकल्प्य महापथगमने । 'अनाशके' अनशने ॥ (शुद्धिप्रकाशः, ५३)

(५) 'डिम्बाहवे' इति शुद्धिप्रकाशपाठः [५४]

(६) डिम्बाहवे शस्त्रैरभिमुखहतस्य सद्यश्शौचम्, पराङ्मुखहतस्य त्रिरात्रम् । वज्राभिघातेन मरणं मे भवत्विति शास्त्राविहितबुद्धिपूर्वं हतस्य मरणे सद्यःशौचम् । शास्त्रविहितबुद्धिपूर्वं प्रमादतो वा वज्राहतस्य मरणे त्रिरात्रम् । राजवधार्हापराधेन हतस्य सद्य.शौचम् । अल्पापराधेन हतस्य त्रिरात्रम् । गोविप्ररक्षार्थं शस्त्रेण युद्ध्यमानस्य अभिमुखहतस्य सद्यःशौचं, पराङ्मुखहतस्य त्रिरात्रम् इति ॥ (शुद्धिप्रकाशः, ५५)

(७) वन्दिनां—आ, शु. प्र—५४—"दण्डिनामित्यत्रापपाठः 'वन्दिनां' चौरादिगृहीतानां बन्दिदशायामेव विपन्नानामित्यर्थ इति मिश्राः ॥ (शुद्धिप्रकाशः, ५४)

गौतमः [१४, ९-११]

गोब्राह्मणहतानामन्वक्षम् । राजक्रोधाच्च [१]युद्धे । प्रायोनाशकशस्त्राग्निविषोदकोद्बन्धन[२]प्रपतनैश्चेच्छताम् ॥

'शौचं' सद्यःशौचमित्यर्थः । 'प्रायो' महापथगमनम् ॥

शङ्खः

भृग्वग्न्यनाशकाम्भोभिः मृतानामात्मघातिनाम् ।
पतितानां च नाशौचं शस्त्रविद्युद्धताश्च ये ॥
व्यापादयेद्यथात्मानं [३]स्वयं वाग्न्युदकादिषु ।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया ॥
अथ कश्चित् प्रमादेन म्रियेताग्न्युदकादिषु ।
तस्याशौचं विधातव्यं कार्या चास्योदकक्रिया ॥

सुमन्तुः

भृग्वग्निजलसङ्ग्रामे देशान्तरे संस्थाप्याशनिमहाध्वनिकानामुदकक्रिया कार्या । सद्यःशौचं भवति ॥

'सद्यःशौचं' इत्यनुवृत्तौ—

शङ्खलिखितौ

अथ शस्त्रानाशकाग्निवज्रभृगुजलविषुषप्रमापणेष्वेवमेव ॥

(१) युधि—आ, अ, उ-; 'युद्ध' इति शु. प्र.

(२) 'प्रपतनं' गिरिशिखरादितः पातः ॥ (शु. प्र., ५६) 'प्रपतनं' पर्वताद्वृक्षाद्वा (मस्करी)

(३) स्वयं योऽन्यु—अ.

**जाबालः**

दुर्भिक्षे राष्ट्रसंपाते शस्त्रगोब्रह्मघातिते ।
पतितेऽनशनप्रेते[१] विदेशस्थे शिशौ न च ॥
एतेषामशौचं न भवतीत्यर्थः ।

**हारीतः**

प्रायोऽग्निमेरुसिंहव्याघ्र[२]डिम्बाहवहतानां सद्यःशौचम् ॥

**काश्यपः**

अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसङ्ग्राम-देशान्तरमृतानां गर्भाणां[३] जातदन्तमृतानां त्रिरात्रेण शुद्धिः ॥

**ब्रह्मपुराणे**

दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि[४] ।
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ॥
अगाधतोयराशिं च भृगोः पतनमेव च ।
गच्छेन्महापथं वापि तुषारगिरिमादरात् ॥
प्रयागवटशाखाग्राद्देहत्यागं करोति वा ।
स्वयं देहविनाशे तु काले प्राप्ते महामतिः ॥

(१) पतितेन स न प्रेते—अ.
(२) डिंबाहतहतानां (?)—अ.
(३) गर्भिण्यां—अ ; गर्भिणीनां—आ.
(४) 'यदि' इति शु. प्र. पाठः (६०)

उत्तमानाप्नुयाल्लोकानात्मघाती कचिद्भवेत् ।[१]
महापापक्रियः स्वर्गे दिव्यान् भोगान् समश्नुते ॥

एतेषामधिकारस्तु तपसां सर्वजन्तुषु ।
नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥

ईदृशं मृतकं येषां जीवतां कुत्रचिद्भवेत् ।
अशौचं तु त्र्यहं तेषां वज्रानलहते तथा ॥[२]

---

(१) The undermentioned lines follow in the same page, in S'uddhiprakās'a :

वाराणस्यां मृतो यस्तु प्रत्याख्यातभिषक्क्रियः ।
काष्ठपाषाणमध्यस्थो जाह्नवीजलमध्यगः ॥

अविमुक्तमुखस्तस्य कर्णमूलगतो हरः ।
प्रणवं तारकं ब्रूते नान्यथा कुत्रचित् क्वचित् ॥

(२) 'महामतिः' दृढीकृतबुद्धिः । 'महापापक्रियः' महापातक्यपि स्वर्गं प्राप्नोति किमुतान्य इति सातिशयत्वदर्शनमात्रम् ॥ (शुद्धिप्रकाशः, पृ. ६०)






# अथाऽसपिण्डाद्याशौचम्

तत्र मनुविष्णू [मनु, ५, ५६; विष्णु, २२, ५६]

गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ।
[१]प्रेतहारैः समं तत्र दशरात्रेण शुध्यति ॥

'पितृमेधो' अन्त्येष्टिः ॥

आश्वलायनः [४, ५, ४-९]

दानाध्ययने वर्जयेरन् दशाहं सपिण्डेषु । गुरौ चासपिण्डे । अप्रत्तासु स्त्रीषु त्रिरात्रम् । इतरेष्वाचार्येषु । ज्ञातौ चासपिण्डे । प्रत्तासु च स्त्रीष्वदन्तजाते परिजाते चैकाहं सब्रह्मचारिणि समानग्रामीये च श्रोत्रिये ॥[२]

(१) प्रेतदारैः—अ.

(२) Text confused and restored. असपिण्डो गुरुः मातुलश्वशुरादिः । 'इतरेषु' महागुरुव्यतिरिक्तेष्वाचार्येषु । 'असपिण्डो ज्ञातिः' समानोदकः । 'प्रत्तासु' दुहित्रादिषु । 'अदन्तजाते' बाले । 'परिजातो' दन्तजातः । तत्रापि एकाहं दानादि वर्जयेत् । उपनयनादारभ्य आसमावर्तनाद्यः सह व्रतं चरितवान् स 'सब्रह्मचारी' । समाने एकस्मिन् ग्रामे भवः 'समानग्रामीयः' । 'श्रोत्रियः' अधीतवेदः ॥ (हरदत्तः)

गौतमः [१४, १८-२७]

[१][श्रुत्वा चोर्ध्वं दशम्याः] पक्षिणीम्। असपिण्डे योनिसंबन्धे सहाध्यायिनि च। सब्रह्मचारिण्येकाहम्। श्रोत्रिये चोपसंपन्ने। प्रेतोपस्पर्शने दशरात्रमाशौचमभिसंधाय चेत्। उक्तं वैश्यशूद्रयोः। आर्तवीर्वा। पूर्वयोश्च। त्र्यहं वा। आचार्यतत्पुत्रस्त्रीयाज्यशिष्येषु चैवम् ॥§

मनुः [५, ८०-८२; ७१]

त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति।
तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः ॥
श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भवेत्।
मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च ॥
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः।
अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ॥

(१) Words in brackets necessary but are missing in the manuscripts; manuscripts corrupt.

'पक्षिणी' अहर्द्वयमध्यगता रात्रिः, रात्रिद्वयमध्यगतं अहर्वा। सपिण्डजननं मरणं वा श्रुत्वा पक्षिण्याशौचं भवति। 'असपिण्डः' समानोदकः तस्मिन् मृते समानोदकानां पक्षिणी। 'योनिसंबन्धिनः' मातुलमातृभागिनेयपैतृष्वस्रेयाः। तेषु मृतेषु पक्षिणी। 'सब्रह्मचारी' समानचरणः, तस्मिन् मृते एकाहोरात्रमाशौचं गृह्णीयात्। 'उपसंपन्ने' ज्ञानानुष्ठानसंपदुपेते। 'उपस्पर्शने' चेद्यदि दृष्टमङ्गीकृत्य स्पृशति, न तु धर्मार्थकामतो वा। 'आर्तवीः' ऋतुसमानसंख्या वा रात्रीः वैश्यशूद्रयोराशौचम्। आचार्यादिमृते चैवम्। चशब्दादाचार्याचार्ये ॥ (मस्करी)

§ From here folio 27, 28 and 29 in आ are missing.

सब्रह्मचारिण्येकाहमतीते क्षपणं स्मृतम् ।
जन्मन्येकोदकानां तु त्रिरात्राच्छुद्धिरिष्यते ॥
'सज्योतिः' नक्षत्रदर्शनं यावत् ॥

शङ्खः[1]

मातामहे तथातीते आचार्ये तु तथा मृते ।
गृहे मृतासु कन्यासु दत्तासु च तथा त्र्यहम् ॥
निवासराजनि प्रेते जाते दौहित्रके तथा ।
आचार्यपत्नीपुत्रेषु मृतेषु दिवसेन तु ॥
मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ।
सब्रह्मचारिण्येकाहमनूचाने मृते तथा ॥

याज्ञवल्क्यः [३, २४]

अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ।
गुर्वन्तेवास्यनूचाने मातुले श्रोत्रियस्य च ॥

बृहस्पतिः [आशौ, २७, ३३]

त्र्यहं मातामहाचार्यश्रोत्रियेषु शुचिर्नरः ।
मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च ॥
[2]अश्रोत्रिये त्वहः कृत्स्नमनूचाने तथा गुरौ ।
प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितिः ॥

(१) शङ्खस्मृतिः, १५, १४-१६ (आनन्दाश्रममुद्रितस्मृतीनां समुच्चये, पृ. ३८८)

(२) Identical with मनुस्मृति, ५, ८२.

बौधायनः [१, ११, २५]

त्रिरात्रमहोरात्रमेकाहमिति कुर्वीत ॥

जाबालः

समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम् ।
मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा ॥

'शुद्ध्येद्' इत्यनुवृत्तौ विष्णुः [२२, ४२–४५]

आचार्ये मातामहे च व्यतीते त्रिरात्रेण ।
अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥

आचार्यपत्नीपुत्रोपाध्यायमातुलश्वशुरश्वशुर्यसहाध्यायिशिष्येष्वतीतेष्वेकरात्रेण । स्वदेशराजनि च ॥

'श्वशुर्यः' श्यालः ।

हारीतः

परपूर्वासु भार्यासु पुत्रेषु च मृतेषु च ।
मातामहे त्रिरात्रं स्यादेकाहं तु सपिण्डतः ॥

याज्ञवल्क्यः [३, २५]

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
निवासराजनि प्रेते तदहः शुद्धिकारणम् ॥

ब्रह्मपुराणे

औरसं वर्जयित्वा तु समवर्णेषु सर्वदा ।
क्षेत्रजादिषु पुत्रेषु जातेष्वथ मृतेषु च ॥
अशौचं च त्रिरात्रं स्यात् समानामिति निश्चयः ॥

तथा

आदावन्यस्य दत्तायां कुत्रचित्पुत्रयोर्द्वयोः ।
पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डनाम् ॥
एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित् ।
तयोः स्यात्सूतकादैक्यं मृताहाद्वा परस्परम् ॥

शङ्खः

अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।
परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते ॥

बृहस्पतिः [आशौ., २४]

अन्यपूर्वेषु दारेषु परपत्नीषु तेषु च ।
मृतेष्वाप्लुत्य शुध्येत्तु त्रिरात्रेण द्विजोत्तमः ॥

'अशौचं' इत्यनुवृत्तौ—

शङ्खलिखितौ

अन्यपूर्वासु भार्यासु कृतेषु च सुतेषु च ।
मृतेषु च त्र्यहं तत्र नाध्यायो नोदकक्रिया ॥

---

# अथ निर्हाराद्यशौचम्

**तत्र मनुः** [५, १००–१०३]

एतद्वोऽभिहितं शौचं सपिण्डेषु द्विजोत्तमाः ।
असपिण्डेषु सर्वेषु प्रेतशुद्धिं निबोधत ॥

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥

यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।[१]
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥

'बन्धुवत्' बान्धवभावेन स्नेहादिना दृष्टार्थम् । तत्र निर्हृत्याश्नतो निवसतश्च[२] दशरात्रम् । अनश्नतः सहवसतश्च त्रिरात्रम् । [२]अवसतोऽनश्नतः एकरात्रम् ॥

**अङ्गिराः**

अन्तर्दशाहे भुक्त्वा तु सूतके मृतकेऽपि वा ।
असंस्पृश्यो भवेत्तावद्यावत्तद्व्रतमाचरेत् ॥

(१) दशाहेम विशुध्यति—अ.

(२) विवसतश्च—अ.

सूतके मृतके शावमाशौचं ह्यस्थिसंचयात् ।
[1]अन्नसत्रप्रवृत्तानामाममन्नं विगर्हितम् ॥
[2]भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु पयः पिबेत् ॥
आदावारभ्य तु परः सायं भुञ्जीत नान्तरा ।
सपिण्डैः सह शुध्येत्तु अधश्शायी सुसंयतः ॥
यस्तु भुङ्क्ते पराशौचे वर्णः सोऽप्यशुचिर्भवेत् ।
अन्ते शुद्धिश्च तस्यैव तस्याप्युक्ता मनीषिभिः ॥

असपिण्डस्यान्तर्दशाहभोजने 'असंस्पृश्यत्वं' इदं ज्ञेयम् । 'तद्व्रतं' तदाशौचाचरणनियमं, न प्रायश्चित्तम् । 'शावं' शावनिमित्तकं कटधारणादि[3]कर्म ॥

बृहस्पतिः [आशौ., ४४]

यस्तैः सहाऽसपिण्डोऽपि प्रकुर्याच्छयनासनम् ।
बान्धवोऽबान्धवो वापि दशाहेन विशुध्यति ॥

विष्णुः [२२, ८–९]

ब्राह्मणादीनामशौचे यः सकृदेवान्नमश्नीयात् तस्य तावदशौचं यावत्तेषाम् । [4]अशौचापगमे प्रायश्चित्तं कुर्यात् ॥

[अङ्गिराः]

गृहे यस्य मृते कश्चिदसपिण्डः कथंचन ।
तस्याप्यशौचं विज्ञेयं त्रिरात्रं नात्र संशयः ॥

(१) अत्र सूत्रप्रवृत्तानां—अ; परमनुप्रवृत्तानां—उ.
(२) भुक्त्वा पक्वान्नं—अ. (३) धर्म—अ. (४) आशौचव्यपगमे—अ.

प्रेतान्नमसपिण्डस्य[१] यावदश्नात्यकामतः ।
तावत् त्र्यहाण्यशौचं स्यादपिण्डानां कथंचन ॥

'एकरात्रेण शुध्येद्' इत्यनुवृत्तौ—

**विष्णुः** [२२, ४६]

असपिण्डे च [२]स्ववेश्मनि मृते च ॥

**[पैठीनसिः]**

असंबन्धिनं द्विजं हृत्वा सद्यःशौचम् । सम्बन्धे त्रिरात्रम् ॥

**बौधायनः** [१, ११, ३०–३२]

[३]परशवोपस्पर्शनेऽनभिसंन्धिपूर्वं सचेलोऽपः स्पृष्ट्वा सद्यश्शुद्धो भवति । अभिसन्धिपूर्वं त्रिरात्रम् । ऋतुमत्यां च ॥

**याज्ञवल्क्यः** [३, १४]

[४]प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥

**अङ्गिराः**

यः कश्चिन्निर्हरेत्प्रेतमसपिण्डः कथश्चन ।
स्नात्वा सचैलः स्पृष्ट्वाग्निं तस्मिन्नेवाह्नि शुध्यति ॥

(१) असपिण्डस्य—अ; असपिण्डश्च—उ. (२) सुवेश्मनि—उ.

(३) 'परशवः' असपिण्डशवः । 'अभिसन्धिः' कामः तदभावो 'अनभिसन्धिः' । 'अपां स्पर्शनं' अवगाहनम् । तत्सद्य एव कुर्वीत, न विलम्बयेत् । 'ऋतुमती' रजस्वला । तत्स्पर्शेऽप्यभिसन्ध्यनभिसन्धिकृतो विभागो वेदितव्यः ॥ (गोविन्दस्वामी)

(४) 'प्रवेशनादिकं कर्म' पूर्वोक्तं [३, १२–१३] निम्बपत्रदशनादि वेश्मप्रवेशनान्तं कर्म, तत्र न केवलं ज्ञातीनां, अपि तु परेषामपि धर्मार्थं प्रेतालङ्कारनिर्हरणादिकं कुर्वतां भवति ॥ (मिताक्षरा)

पराशरः [३, ४१—]

अनाथं ब्राह्मणं पूर्वं ये हरन्ति द्विजातयः ।
पदे पदे यज्ञफलं सानुपूर्व्याश्नुवन्ति ते ॥
[१]प्रेतस्पर्शनसंस्कारैः ब्राह्मणो नैव दुष्यति ।
[२]वोढा वाप्यग्निदाता वा सद्यः स्नात्वा शुचिर्भवेत् ॥

[कूर्मपुराणे][३]

अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि ।
अशौचे संस्पृशेत् स्नेहात् तदशौचेन शुध्यति ॥

पराशरः [३, ४७]

प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥

वसिष्ठः

मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचम् । अस्निग्धे त्वहोरात्रम् । शवानुगमने चैव ॥

ब्रह्मपुराणे [आदिपुराणे]

योऽसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः ।
अशौचं तु भवेत्तस्य [४]प्रेतजातिसमं सदा ॥

(१) प्रेतस्पर्शनसंस्कारैः'—अ; प्रेतस्य समसंस्कारैः—उ.

(२) वोढा वाप्यग्निदाता वा सद्यः स्नातो—अ.

(३) मनुरित्यपपाठः मूलमातृकासु । शुद्धिप्रकाशे कूर्मपुराणमिति (पृ. ६६) । व्याख्यातञ्च—; "तदापद्विषयम् । अत्र स्पृशेदिति दहनाद्यर्थे स्पृशेदित्यर्थः ।" Manuscripts corrupt.

(४) प्रेते जातिसमं—उ, आ.

सर्वे वर्णाः सजातीयं दग्ध्वा त्र्यहमशौचिनः ।
[१]भवन्ति परजातीयं निर्हृत्य परजातिवत् ॥
सजातिमसपिण्डं तु दग्ध्वा तद्गृहभोजिनः ।
स्वजात्युक्तमशौचं तु चरन्ति जडबुद्धयः ॥
[२]अन्यजातिं मृतं दग्ध्वा दत्तान्नं भुञ्जते तु ये ।
कुत्सितास्ते नराः प्रोक्तास्तस्याशौचस्य भागिनः ॥
दाहयित्वा तु मूल्येन गुरुं प्रेतं भवेत्ततः ।
अशौचं दशरात्रं तु शिष्यस्येति विनिश्चयः ॥
आचार्यं वाप्युपाध्यायं गुरुं वा पितरं च वा ।
मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोजनम् ॥
कृत्वा पतति नो तस्मात् प्रेतान्नं तस्य भक्षयेत् ।
अन्यत्र [३]भोजनं कुर्यान्न च तैः सह संवसेत् ॥
एकाहमशुचिर्भूत्वा द्वितीयेऽहनि शुध्यति ।

तथा[४]

ब्राह्मणो न दहेच्छूद्रं मित्रं वाप्यन्यमेव वा ।
मोहाद्दग्ध्वा ततः स्नातः स्पृष्ट्वाऽग्निं प्राशयेद् घृतम् ॥

(१) 'भवन्तीति — परजातीयं स्नेहाद् दग्ध्वा परजातीयाशौचिनो भवन्तीत्यर्थः (शुद्धिप्रकाशः, ६७)

(२) 'अन्यजाति' इति—अन्यजातीयदाहं कृत्वा तत्पुत्रपत्न्याद्यन्नभोजने तज्जात्युक्ताशौचिनो भवन्ति ॥ (शुद्धिप्रकाशः, ६८)

(३) भाषणं—अ.

(४) 'स्मृत्यन्तरात्' इति शुद्धिप्रकाशे, ६६.

[१]उपवासरतः पश्चात् त्रिरात्रेण च शुध्यति ।
सर्वेषां स्यादहोरात्रं शवानुगमनादपि ॥
शब्दस्पर्शविधानोक्तं विहितं सार्ववर्णिकम् ।
मृतस्य यावदस्थीनि ब्राह्मणस्याहृतान्यपि ॥
तावद्यो बान्धवस्तत्र रौति तद्बान्धवैस्सह ।
स्नानात्तस्य भवेच्छुद्धिस्ततस्त्वाचमनं [२]स्मृतम् ॥
अनस्थिसंचयाद्विप्रो रौति चेत् क्षत्रवैश्ययोः ।
[३]तदा स्नातः सचैलस्तु द्वितीयेऽहनि शुध्यति ॥[४]
अस्थिसंचयनादूर्ध्वमहोरात्रेण शुध्यति ।
सचैलस्नानमन्येषामकृतेऽप्यस्थिसंचये ॥
कृते तु केवलं स्नानं क्षत्रविट्शूद्रजन्मनः ॥

---

(१) 'उदवासव्रतः' इति शु. प्र. पाठः
(२) भवेदिति उ, अ, आ ; 'स्मृतं' इति शु. प्र. पाठः, ७०.
(३) 'ततः' इति शु. प्र., ७०,
(४) शुद्धिप्रकाशेऽत्रैष श्लोको दृष्टः—

अनस्थिसंचिते शूद्रे ब्राह्मणो रौति चेज्जडः ।
ततः स्नातः सचैलस्तु शुध्येत्तु दिवसैस्त्रिभिः ॥

१३

# अथाऽनाशौचिनः

तत्र शङ्खलिखितौ

राजा धर्मायतनं सर्वेषाम् । तस्मादनवरुद्धः प्रेतप्रसव-दोषैः । एवमाह—

राज्ञः पुरोहितो मान्यः शुद्धिस्तस्य तदाश्रयात् ।
शिष्यस्तु पैतृकं शौचं गुरवे न प्रपद्यते ॥
पिण्डोदकं तु जनकं गोत्रमेव प्रपद्यते ।
उपासीने तत्समीपवासिनि ब्रह्मचारिणि ॥

यमः

नाघदोषोऽस्ति वै राज्ञां व्रतिनां सत्रिणां तथा ।
ऐन्द्रस्थानं समासीना ब्रह्मरूपा हि ते सदा ॥

राज्ञामात्ययिके कार्ये सद्यः शौचं विधीयते ।
प्रजानां रक्षणार्थाय नाशनं तत्र कारणम् ॥

गौतमः [१४, ४२-४४]

सद्यःशौचं राज्ञां च कार्यनिरोधात् । ब्राह्मणस्य च स्वाध्या-यनिवृत्त्यर्थम् ॥

विष्णुः [२२, ४७-५२]

आशौचं न राज्ञां राजकर्मणि। न व्रतिनां व्रते। न सत्रिणां सत्रे। न कारुकाणां कारुकर्मणि। न राजाज्ञाकारिणां तदिच्छया ॥

[वृद्ध]पराशरः[१]

राज्ञां च सूतकं नास्ति व्रतिनां न च सत्रिणाम्।
दीक्षितानां च सर्वेषां यस्य चेच्छति [२]पार्थिवः ॥
दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च।
तपोदानप्रसक्तेषु नाशौचं मृतसूतके ॥

शातातपः

यस्य स्वच्छन्दं नेच्छन्ति नरेन्द्राः सद्यः स्पर्शनमात्र एवमशौचम् ॥

हारीतः

सङ्ग्रामस्थश्च राजन्यो वैश्यो मध्यगतो गवाम्।
सत्री च ब्राह्मणो नित्यं ब्रह्मचारी च वै शुचिः ॥

जाबालः

ब्रह्मचारिणि भूपे च यतौ व्रतिनि दीक्षिते।
यज्ञे विवाहे शस्त्रे च सूतकं न कदाचन ॥

(१) वृद्धपराशरवचनमिति पराशरमाधवीये (ed. Islampurkar, I, II, p. 256); but the third line is missing there.

छन्दोगपरिशिष्टे कात्यायनः[१]

न त्यजेत् सूतके कर्म ब्रह्मचारी स्वयं क्वचित् ।
न दीक्षणात्परं यज्ञे न कृच्छ्रादि तपश्चरन् ॥
पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ।
अशौचं कर्मणोऽन्ते स्यात् त्र्यहं तु ब्रह्मचारिणाम् ॥

'क्वचित्' क्वचित्कर्म ।

[प्रचेताः][२]

कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ।
राजानो राजभृत्याश्च सद्यश्शौचाः प्रकीर्तिताः ॥

याज्ञवल्क्यः [३, २८–२९]

ऋत्विजां दीक्षितानाञ्च [३]यज्ञे कर्मणि तिष्ठताम् ।
सत्त्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥

अङ्गिराः[४]

जनने मरणे चैव त्रिष्वाशौचं न विद्यते ।
यज्ञे विवाहकाले च देवयागे तथैव च ॥

(१) गोभिलस्मृतिः, ३, ४०, ६५

(२) 'पराशरः' इति अ, आ, उ; प्राचेतसवचनमिदमिति पराशरमाधवीये, ३, २० सूचितम् । पराशरस्त्वित्थमाह—

शिल्पिनः कारुका वैद्या दासीदासाश्च नापिताः ।
राजानः श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः ॥ (३, २०)

(३) यज्ञियं कर्म कुर्वतामिति मिताक्षरापाठः ।

(४) पराशरमाधवीये, ३, २२

'अशौचम्' इत्यनुवृत्तौ—

**विष्णुः** [२२, ५३-५५]

न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोः । न देशविभ्रमे । आपद्यपि च कष्टायाम् ।[१]

**ब्रह्मपुराणे**

विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्दद्यात् गृहभोक्तॄंश्च न स्पृशेत् ॥

[२]**पराशरः**

दुर्भिक्षे राष्ट्रसंपात आपदां च समुद्भवे ।
उपसर्गमृते चैव सद्यःशौचं विधीयते ॥

**यमः**

स्वस्थकाले त्वयं धर्म आपदि त्वन्यथा स्मृतः ।
दैवे भये समुत्पन्ने प्रधानाङ्गे विनाशिते ॥
पूर्वं सङ्कल्पितेऽर्थे वा तस्मिन्नाशौचमुच्यते ।

**दक्षः**

स्वस्थकाले त्विदं सर्वमशौचं परिकीर्तितम् ।
आपद्गतस्य सर्वस्य सूतकेऽपि न सूतकम् ॥

---

(१) मूर्तिप्रतिष्ठापने पूर्वमाशौचात् संभारप्रारम्भश्चेत् । देशविप्लवे स्पर्शादौ तन्निमित्तशान्त्यादौ च । कष्टापत् दुर्भिक्षरोगादिः । तत्र प्रतिग्रहदानादौ नाशौचम् (वैजयन्ती)

(२) Not found in *Parāśarasmṛti*.

# अथ सपिण्डादिलक्षणम्

तत्र मनुः [५, ६०]

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावश्च जन्मनाम्नोरवेदने ॥

शङ्खलिखितौ

सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी ।
पिण्डश्चोदकदानं च शौचाशौचं तदानुगम् ॥

गौतमः [१४, १२]

[१]पिण्डनिवृत्तिः सप्तमे पञ्चमे वा ॥

वसिष्ठः [४, १८-१८]

सपिण्डत्वं [२]साप्तपुरुषं विज्ञायते । [३]अप्रत्तानां च स्त्रीणां त्रिपुरुषम् ॥

मत्स्यपुराणे

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदस्सप्तमस्तेषां सापिण्ड्यं सप्तपौरुषम् ॥

(१) 'पिण्डान्निवृत्तिः'—उ ; पिण्डनिवृत्तिः—अ, मु. पाठश्च

(२) 'सप्तपुरुषं'—उ, अ, आ ; 'साप्तपुरुषं' मु. वासि.

(३) 'प्रत्तानां' इति मुद्रितवासिष्ठे । 'सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी' इति सुमन्तुः (छ. प्र., ३०) ।

**सुमन्तुः**

तत्र ब्राह्मणानामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति[1]। सप्तमाद्गोत्रविच्छित्तिर्भवति। आतृतीयात् स्वधाविच्छित्तिर्भवति। अन्यथा पिण्डशौचक्रियाव्युच्छेदाद्ब्रह्मघ्नतुल्यो भवति ॥

**ब्रह्मपुराणे**

सर्वेषामेव वर्णानां विज्ञेया साप्तपौरुषी।
सापिण्ड्यं तु ततः पश्चात् समानोदकधर्मता ॥

ततः कालवशात्तत्र विस्मृतैर्जन्मनामभिः।
समानोदकसंज्ञा तु तावन्मात्रेऽपि नश्यति ॥

आत्मा पिता तत्पिता तु आत्मनः प्रपितामहः।
तस्यापि यः पिता कश्चित् तथैव च पितामहः ॥

प्रपितामहसंज्ञस्य यः कश्चित् प्रपितामहः।
ऊर्ध्वं गणनया चाद्यः सर्वेषां प्रपितामहः ॥

पितामहो द्वितीयस्तु तृतीयस्तु पिता भवेत्।
सोदर्येण सह भ्रात्रा स्यादात्मापि चतुर्थकः ॥

सवर्णायास्तथा पुत्रः पञ्चमः परिकीर्तितः।
षष्ठः पौत्रः प्रपौत्रश्च सप्तमः परिकीर्तितः ॥

एवं मृतानामेतेषां सजीवं तु प्रपौत्रकः।
[2]अविभक्तधनास्त्वेते सपिण्डाः परिकीर्तिताः ॥

(१) 'सपिण्डताविच्छित्तिर्भवति' इति शुद्धिकौमुदी (५१) पाठः।

(२) 'स्वविभक्त' इति ङ.

भ्रातृभिर्वा यतस्त्वन्यैर्विभक्तार्थाः [१]सहोदराः ।
विभक्तार्थाः सकुल्यास्तु श्राद्धादौ लेपभागिनः ॥

क्षत्रविट्शूद्रजातीनां सापिण्ड्यं तु त्रिपौरुषम् ।
ब्राह्मणैरपि जातानामविभक्तार्थभागिनाम् ॥

विभक्तानां तु किं तेषां मातृज्ञातीव संशयः ।
[२]सपिण्डता तु कन्यायाः सवर्णानां त्रिपौरुषी ॥

---

(१) सहोदकाः—अ,
(२) सपिण्डानां तु—अ.

# अथ प्रेतनिर्हरणम्

तत्र मनुः [५, ९२]

दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तु [१]यथायोगं [२]द्विजन्मनः ॥

हारीतः

न ग्रामाभिमुखं प्रेतं हरेत् ॥

मनुः [५, १०८]

न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत् ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता ॥

यमः

न शूद्रो यजमानं वै प्रेतीभूतमनूद्धरेत् ।
शूद्रसंस्पर्शनादाशु न स्वर्ग्यास्ते द्विजातयः ॥

यस्त्वानयति शूद्रोऽग्निं [३]तृणकाष्ठहवींषि च ।
मन्यते ह्येष धर्मोऽस्ति स चाधर्मेण लिप्यते ॥

(१) 'यथासंख्यं' इति गोविन्दराजपाठः । (२) 'द्विजातयः' इति मेधातिथिपाठः ।
(३) 'नृप' इति अलवारकोशेऽपपाठः ।

विष्णुः [१९, १-५]

मृतं द्विजं न शूद्रेण [1]हारयेत्। न शूद्रं द्विजेन। पितरं मातरं च पुत्रा निर्हरेयुः। [2]न द्विजं पितरं [3]मातरं वा शूद्राः। ब्राह्मणमनाथं ये ब्राह्मणा निर्हरन्ति ते स्वर्गलोकभाजः॥

पराशरः [३, ४१]

अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः।
पदे पदे यज्ञफलमानुपूर्व्या लभन्ति ते॥

याज्ञवल्क्यः [३, २६]

ब्राह्मणेनानुगन्तव्यो [4]न तु शूद्रः कथंचन।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः॥

---

(१) 'निर्हारयेत्' इति मुद्रितपुस्तके।
(२) 'सद्विजं' इति अलवार्मातृकादतोऽयपाठः।
(३) मुद्रितपुस्तके 'मातरं' इति नास्ति।
(४) 'न शूद्रो न द्विजः क्वचित्' इति मिताक्षरादत्तपाठः.

# अथ प्रेतसंस्कारः

तत्र पराशरः [३, १९]

अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः ।
[१]न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥

यमः

श्वभ्रे निखानयेद्बालानेवं धर्मो न हीयते ।
यमगाथां गायमानो यमसूक्तमनुस्मरन् ॥
नैव तस्याग्निसंस्कारो न विधिर्नोदकक्रिया ।

सुमन्तुः

आद्विवर्षान्निखातस्य नोदकक्रिया कार्या, सद्यःशौचं भवति ॥

हारीतः

सांवत्सरिकोऽग्निसंस्कारोऽग्न्यधिकाराद्वोदयान्नोदकक्रियां कुर्वन्ति । द्विवर्षादित्येके ॥

मनुः [५, ६८-८०]

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसंचयनादृते ॥

(१) तेषां च नाग्निसंस्कारो—ड, आ.

नास्य कार्योऽग्निसंस्कारो न च कार्योदकक्रिया ।
अरण्ये काष्ठवत् त्यक्त्वा [१]क्षिपेयुस्त्र्यहमेव तु ॥
नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया ॥
जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥

याज्ञवल्क्यः [३, १-२]

ऊनद्विवर्षं निखनेन्न[२] कुर्यादुदकं ततः ।
आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः ॥
यमसूक्तं तथा गाथां जपद्भिर्लौकिकाग्निना ।
स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥

'उपेतः' उपनीतः । 'आहिताग्न्यावृता' आहिताग्नेरिति-कर्तव्यतया ॥

'अद्विवर्षे प्रेत' इत्यनुवृत्तौ—

पारस्करः [३, १०, ५-१२]

शरीरमदग्ध्वा निखनन्ति । अन्तःसूतके चेदुत्थानादाशौचं सूतकवत् । नात्रोदककर्म । द्विवर्षप्रभृति प्रेतमाश्मशानात् सर्वेऽनुगच्छेयुः । यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके । यद्युपेतो [३]भूमिजोषणादि[४]समानमाहिताग्नेरोदकान्तस्य गमनात् । शालाग्निना [५]दहन्त्येनमाहितश्चेत् । तूष्णीं ग्रामाग्निनेतरम् ॥

(१) क्षिपेतत्र्यमेव वा—(गोविन्दराजः) । क्षपेयुस्त्र्यमेव च (मेधातिथिः) । क्षपयेत्त्र्यहमेव च (कुल्लूकः) (२) Lacuna in अ ends here.

(३) भूमि पोषणादि—उ (४) प्रमाणं—उ

(५) दधन्ते न मातुः (!)—उ

'अन्तःसूतकेत्यादि'—सूतकमध्ये यदि म्रियते बालकस्तदा 'सूतकवदशौचम्' सूतकोत्थानपर्यन्तमेवं भवतीत्यर्थः। 'द्विवर्षे' इति, प्रेते इति शेषः। 'सर्वे' सपिण्डाः। 'इतरं' अकृतावसथ्यम् ॥

वसिष्ठः [४, ९-१०]

उदकक्रियाशौचं चेत् द्विवर्षात् प्रभृति। आदन्तजननादित्येके ॥

गौतमः [१४, ३२-३४]

उदकदानं सपिण्डैः कृतजटस्य। तत्स्त्रीणां च। एके प्रत्तानाम् ॥

यमः

आहिताग्निस्तु यो विप्रो दह्यते चे[१]द्वृथाग्निना।
ब्राह्मण्यात् स परिभ्रष्टः शूद्रयोन्यां प्रसूयते ॥

वसिष्ठः [४, ३७]

आहिताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववच्छौचमिति गौतमः ॥

कात्यायनः [श्रौतसूत्रम्, २५, ८, ८-१४][२]

प्रोषितश्चेत् प्रेयात् प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने। तत एव हरणात्। अधस्तात् समिधं धारयन्। उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा। सकृद्वा पितृवत्पर्यस्य।

(१) वृथाग्निना—आ; पृथगग्निना—उ.
(२) Entire passage corrupt; reconstructed from Vidyadhara Gauda's edn. of कात्यायनश्रौतसूत्रम्, सं. १९८७, पृ. ३०२.

शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याऽऽज्येनाभिघार्य पूर्ववद्दाहः ॥

'पितृवत्' पैतृककर्मवत्। 'पर्यस्य' उद्वास्य।

ब्रह्मपुराणे

आहिताग्नौ विदेशस्थे मृते सति कलेवरम्।
निधेयं नाग्निभिर्यावत् तदीयैरपि दह्यते ॥

तावच्च दक्षिणाग्नेश्च कुशैरास्तीर्य वेदिकाम्।
अधोमुखीं तु समिधं धारयित्वा विधानवित् ॥

परकीयेन वत्सेन दुग्धां तां गां च तद्गृहे।
गोक्षीरेण तथैनैव? जुहुयादग्निहोत्रकम् ॥

पश्चादग्नीन् समारोप्य यज्ञभाण्डानि तान्यपि ॥
उपयच्छेदभिप्राय तथो? दृषदमेव हि।
मथित्वाग्निप्रणयनं कृत्वा तत्कुणपं दहेत् ॥

यज्ञपार्श्वः

यजमाने मृते[1] क्वापि चितां चैव प्रचोदिते।
वर्षाभिरर्हितेऽप्यग्नौ कथं[2] प्रेतविकल्पनम् ॥

शेषं दग्ध्वा[3] न दग्धेषु निर्मन्थं तत्र कारयेत्।
आहृत्य चान्यकाष्ठानि संस्कारं तत्र कारयेत् ॥

(१) इति आ; 'क्वचित्' इति उ.
(२) इति आ; 'कार्यं' इति उ, अ.
(३) शेषान् दग्धे—अ

प्रोषिते तु मृते स्वामिन्यस्थिनाश उपस्थिते।
पलाशस्य तु वृन्तानां विभागं ब्रूहि याज्ञिक ॥
दद्यात् शिरस्यशीत्यर्धं ग्रीवायां (च) दशैव तु।
बाह्वोश्चैव[1] शतं दद्यादङ्गुलीषु तथा दश ॥
उरसि विंशतिं दद्यात् त्रिंशतं जठरोदरे।
अष्टार्धे शिश्ने च दद्यात् द्वादशार्धं वृषणयोः ॥
ऊर्वोश्चैव शतं दद्यादेतत्प्रेतविकल्पनम्।
पुनश्चेदुपलभ्येरन्नस्थीनि तु कदाचन ॥
तदभावे पलाशस्य संभवे हि पुनःक्रियाम्।
द्वितीयं यज्ञपार्श्वस्य श्रुतिर्वाजसनेयिनाम् ॥
अन्येष्वपि च वेदेषु विधानं प्राह कौशिकः ॥
"दग्ध्वा न दग्धेषु' एतेष्वेतेष्वेवोल्मुकेष्वित्यर्थः।

आश्वलायनगृह्यपरिशिष्ट[कारिका][2]

(१) बान्धोश्चैव इत्यपपाठः उदयपुरमातृकायाम्

(२) भट्टकुमारिलप्रणीताश्वलायनगृह्यकारिकाद्दतश्लोकाः (आनन्दाश्रमे मुद्रिताः)
शरीराणि न विन्देरन् देशान्तरमृतस्य यत्। पलाशपर्णवृन्तैस्तु कुर्युस्तत्प्रतिरूपकम् ॥
दद्यात् शिरस्यशीत्यर्धं ग्रीवायां तु दशैव च। उरसि त्रिंशतं दद्यात् विंशति जठरे तथा ॥
बाह्वोर्द्वयोः शतं दद्याद्दश बाह्वङ्गुलीषु च। द्वादशार्धं वृषणयोः अष्टार्धं शिश्न एव च ॥
ऊर्वोर्द्वयोः शतं देयं षष्ट्यर्धं जानुजङ्घयोः। दश पादाङ्गुलीषु स्युरूर्णासूत्रेण बन्धनम् ॥

[आनन्दाश्रममुद्रितकोशे, पृ. २२०] गृह्यपरिशिष्ट वाक्यानि [पृ. १७२]

अथ पालाशविधिः। शिरश्चत्वारिंशता, ग्रीवा दशभिः, उरस्त्रिंशता, उदरं विंशत्या, बाहू शतेन अङ्गुलीर्दशभिरिति। तदूर्णातन्तुबन्धैः पुरुषवत् कृत्वा स्नापयित्वा वाससा चाहतेनाच्छाद्य यथावत्संस्कुर्यात् सञ्चयनकर्मणा च, तत्संहृत्य पुण्येऽम्भसि क्षिपेत् ॥

Wrongly ascribed to the gṛhyasūtra by the manuscripts.

अस्थिनाशे पालाशवृन्तैः प्रतिनिधिं कृत्वा—

अशीत्यर्धं शिरसि (तु) ग्रीवायां दश योजयेत् ।
उरसि त्रिंशतं दद्यात् विंशतिं जठरे तथा ॥

बाहुभ्यां तु शतं दद्यादङ्गुलीषु तथा दश ।
द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु ॥

ऊरुभ्यां च शतं दद्यात् त्रिंशतं जानुजङ्घयोः ।
पादाङ्गुलीषु दश वा एतत्प्रेतेषु कल्पनम् ॥

ऊर्णासूत्रेण परिवेष्ट्य यवपिष्टेन लेपयेत् ।
संस्कृत्य विधिनाऽग्निभिरुदकदानं ततो हरेत् ॥

ब्रह्मपुराणे

आहिताग्न्योश्च दम्पत्योर्यस्त्वादौ म्रियते भुवि ।
तस्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः ॥

पश्चाल्लेप्यास्य देहस्तु दग्धव्यो लौकिकाग्निना ।
अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना द्विजैः ॥

तदभावे पलाशोत्थैः पत्रैः कार्यः पुमानपि ।
शतैस्त्रिभिस्तथा षड्भ्यां शरव्रातैर्विधानतः ॥

वेष्टितव्यस्तथा यत्नात् कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यस्तथा यवैः ॥

स्वपिष्टैर्जलमिश्रैस्तु दग्धव्याश्च तथाग्निना ।
असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥

एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत् ॥

तथा

एवं कृते मृतभ्रान्त्या यद्यागच्छेत् पुमान् क्वचित् ।
कुर्यात्तथायुष्मीमिष्टिं पुनराधाय पावकम् ॥
अथ पर्णनरे दग्धे पात्रन्यासे कृते सति ।
गात्रेष्वग्निषु तद्देहाद्यर्धं लभ्यते क्वचित् ॥
तदर्धं दग्धकाष्ठानि तानि निर्मथ्य तद्दहेत् ।
यद्यर्धं दग्धकाष्ठं तु तदीयं च न लभ्यते ॥

तथा

न दरिद्रोऽपि दग्धव्यो लग्नः कस्यां चिदापदि ।
केनापि वस्त्रखण्डेनाच्छादितव्यस्तु यत्नतः ॥
यत्र यत्र भवेद्दुस्वी(?) यदि नग्नस्तु दृश्यते ।
निःशेषस्तु न दग्धव्यः शेषं किंचित् त्यजेत्ततः ॥
गच्छेत्प्रदक्षिणं सप्त समिद्भिः सह दाहकः ।
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ॥
'क्रव्यादाय नमस्तुभ्य'मिति जल्पेत् समाहितः ।
न प्रेक्षितव्याः क्रव्यादा गन्तव्याथ तदा नदी ॥

छन्दोगपरिशिष्टे कात्यायनः [गोभिलस्मृतिः, ३, २१–३५]

हुतायां [१]सायमाहुत्यां दुर्बलश्चेद् गृही भवेत् ।
प्रातर्होमस्तथैव स्याज्जीवेच्चेद्वा पुनर्भवेत् ॥

(१) शावमाहुत्याम्—ड.

दुर्बलं स्नापयित्वा तु शुद्धचैलादिसंवृतम् ।
दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत् ॥
[1]घृतेनाभ्यक्तमाप्लाव्य सुवस्त्रमुपवीतिनम् ।
चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विशुद्धये ॥
हिरण्यशकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु ।
[2]मुखे वस्त्रं निधायैनं निर्हरेयुः सुतादयः ॥

आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम् ।
एकोऽनुगच्छेत् तस्यार्धमर्धं पथ्युत्सृजेद्भुवि ॥

अर्धमादहनं प्राप्त आसीनो दक्षिणामुखः ।
सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत् ॥

[3]अथ पुत्रादिनाप्लुत्य कुर्याद्दारुचयं महत् ।
भूप्रदेशे शुचौ युक्ते पश्चाच्चित्यादिलक्षणे ॥
तत्रोत्तानं [4]निपात्यैनं दक्षिणाशिरसं मुखे ।
आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रां न्यसेत् स्रुवम् ॥

पादयोरधरां प्राचीमरणीमुरसीतराम् ।
पार्श्वयोः शूर्पचमसे सव्यदक्षिणयोः क्रमात् ॥
मुसलेन सह न्युब्जमन्तरूर्वोरुलूखलम् ।
[5]तत्रोवीलीकचत्रे च अनश्रुनयनो विभीः ॥

(१) घृतेनाभ्यक्तमालभ्य शुद्धवर्णोपजीबिनी—उ.
(२) मुख्येष्वथापिधायैनं निर्हरेयुः—मुद्रितगोभिलीये
(३) अथ पुत्रादि वा स्तुत्य—उ.
(४) पितात्मैनं—उ.
(५) बादौ विलीकभत्रैव न श्वयथनो विभीः—उ.

अपसव्येन कृत्वैतद्वाग्यतः पितृदिङ्मुखः ।
अथाग्निं सव्यजान्वक्तो दद्याद्दक्षिणतः शनैः ॥
अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहेति यजुरीरयन् ॥
एवं गृहपतिर्दग्धः सर्वं तरति दुष्कृतम् ।
यश्चैनं दाहयेत्सोऽपि प्रजां प्राप्नोत्यनिन्दिताम् ॥
[1]यथा सायुधधृक्पान्थो ह्यरण्यान्यपि निर्भयः ।
अतिक्रम्यात्मनोऽ[2]भव्यं स्थानमिष्टं च विन्दति ॥
एवमेषोऽग्निमान् यज्ञपात्रायुधविभूषितः ।
लोकानन्यानतिक्रम्य परं ब्रह्मैव विन्दति ॥




तथा [३, ४६–५३]

एवमेवाऽऽहिताग्नेश्च पात्रन्यासादिकं भवेत् ।
कृष्णाजिनादिकाश्चात्र [3]विशेषोऽध्वर्युनोदितः ॥
विदेशमरणेऽस्थीनि आहृत्या[4]भ्युक्ष्य मानुषात् ।
दाहयेदूर्णयाऽऽच्छाद्य पात्रन्यासादि पूर्ववत् ॥
अस्थ्नामलाभे पार्णानि शलकान्युक्तयाऽऽवृता ।
[5]दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकम् ॥
महापातकसंयुक्तो दैवात्स्यादग्निमान् यदि ।
पुत्रादिः पालयेदग्नीन् [6]युक्तं वाऽऽदोषसंक्षयात् ॥

(१) अथ सवृषत्यार्थं आशोधाय निर्भयः—उ.
(२) 'अभीष्टं' इति मुद्रितगोभिलीये (पृ. ६५)
(३) विशेषो धर्मदर्शितः—उ. (५) 'भर्जयेदस्थिसंख्यानि' इति मु. गोभि.
(४) 'अभ्युक्ष्य' इति मु. गोभि. (६) 'नक्तं वा'—उ.

प्रायश्चित्तं ततः कुर्यात् कुर्वन्वा म्रियते यदि ।
गृह्यं निर्वापयेच्छ्रौतमन्यश्चेत्[1] सपरिग्रहम् ॥

[2]सादयेदुभयं वाऽप्सु अद्भ्योऽग्निरभवद्यतः ।
पात्राणि दद्याद्विप्राय दहेदप्स्वेव वा क्षिपेत् ॥

अनयैवाऽऽवृता नारी दग्धव्या या व्यवस्थिता ।
अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः ॥

अग्निनैव दहेद्भार्यां स्वतन्त्रां पतितां न चेत् ।
[3]तदुत्तरेण पात्राणि दाहयेत्पृथगन्तिके ॥

'दुर्बलः' प्रातर्होमदानपर्यन्तमसंभावित[4]जीवितः । 'दुर्बलं स्नपयित्वा' इत्यत्र 'दुर्बलः' गतप्राणः । 'रात्रौ बिलीनौ' मण्डलार्थं खादिरकाष्ठनिर्मितौ ॥

---

(१) तेषामुदस्येत् सपरिच्छदम्—उ. (२) शामयेदग्निं वाभिः—त्र.

(३) Line in manuscripts unintelligible; text taken from printed Smṛti. अ gives correctly the first quarter of the verse.

(४) जीवनः—अ.

# अथोदकदानम्

तत्र बैजवापः

अथ प्रेतकर्म । प्रेतमरण्यां कृत्वा यथोक्तमग्निं जनयित्वानवेक्षमाणा आयान्त्य एकवाससो व्रतीभूताः कनिष्ठपूर्वा यमगाथां गायन्तो यमसूक्तं जपन्तोऽहरहर्नयमाना गामश्वं पुरुषं पशून् यैश्च न तृप्यति सुराया वा इव दुर्मतिरिरिति । उदकान्तं गत्वा सकृदुन्मज्याऽप्सु सव्यपाणेः कनिष्ठिकयावलिखति कनिष्ठं पापमिति । तस्मिन् त्वेकामुदकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधेति ।

'सव्यपाणेः' मुष्टिना कङ्कतिरूपेण । 'अवलिखति' 'अवलिखितं पापम्' इति ॥

विष्णुः [१९, ६–८]

निर्हृत्य च बान्धवं प्रेतं सत्कृत्याप्रदक्षिणेन चितामभिगम्याऽप्सु सवाससो निमज्जनं कुर्युः । प्रेतस्योदकनिर्वपणं कृत्वैकं पिण्डं कुशेषु दद्युः ॥

वसिष्ठः [४, ११–१३]

शरीरमग्निना संयोज्यानवेक्षमाणा अपोऽभ्यवयन्ति । सव्येतराभ्यां पाणिभ्यामुदकक्रियां कुर्वीरन् । अयुग्मासु दक्षिणामुखाः ॥

हारीतः

निर्हृत्य [निष्क्रम्य] संस्कर्ता [संस्कृत्या]ऽपो गत्वाऽऽप्लाव्यासौ तृप्यतामित्युदकाञ्जलिं निनयति [निर्णयन्ति][१] ।

शङ्खलिखितौ

अथोदकक्रिया । प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य [२][उत्तीर्य] नोद्धर्षयेरंस्ते प्रसिञ्चेरन् सकृत्प्राग्दक्षिणामुखा [ब्राह्मणस्य] उदङ्मुखा प्राङ्मुखा [३]राजन्यवैश्यावप्येवमेवापसव्यं वासोयज्ञोपवीते[४] [वीतिनः] कृत्वा [अञ्जलिना वसने मत्त उदकमित्युक्त्वा तस्मादुत्तीर्य प्रेतसंस्पृष्टानि वासांसि परित्यज्य परिदध्युरन्यानि ॥][५]

ब्रह्मपुराणे[६]

आदौ वस्त्रं च प्रच्छाद्य तेनैवाच्छादितैस्ततः ।
कर्तव्यं तैः सचैलं तु स्नानं सर्वमलापहम् ॥

ततः पाषाणपृष्ठे तु सर्वं देयं तिलोदकम् ।[७]
एकैकेन च देयास्तु विप्रायाञ्जलयो दश ॥

(१) स्मृतिचन्द्रिका, शु. का. पृ. १००, पाठाः आदृताः । मूलमातृकापाठाः कोष्ठेषु सूचिताः.
(२) उत्तीर्य—उ.
(३) Words in brackets found in स्मृतिचन्द्रिका, शु. का., p. 100.
(४) स्मृ. च,—यज्ञोपवीतिनः इति
(५) Citation incomplete in Mss; Completed from शुद्धिप्रकाश p. 201 and shown in brackets.
(६) Five lines from the second are inserted in S'uddhi prakās'a, p. 201
(७) Lacuna in आ begins here.

राज्ञे द्वादश देयास्तु वैश्याय दश पञ्च च।
त्रिंशच्छूद्राय देयास्तु प्रेतभूमिगताय तु॥
अपसव्यं कचित्कृत्वा यज्ञयज्ञोपवीतकैः।
दक्षिणादिङ्मुखैर्विप्रैर्देयं तस्याञ्जलित्रयम्॥
वामाङ्गुष्ठप्रवाहेण भूमावेव पतेत् कचित्।
अमुकोऽमुकगोत्रस्तु प्रेतस्तृप्यत्विदं पठन्॥

आश्वलायनः [४, ४, ९–११]

सव्यावृता व्रजन्त्यनवेक्षमाणाः। यत्रोदकमवहं भवति तत्प्राप्य सकृदुन्मज्यैकाञ्जलिमुत्सृज्य तस्य गोत्रनाम गृहीत्वोत्तीर्यान्यानि वासांसि परिधाय सकृदेतान्यापीड्योदग्दशानि विसृज्यासते आनक्षत्रदर्शनादादित्यस्य वा मण्डले दृश्यमाने प्रविशेयुः॥

'सव्यावृताः' सव्या आवृतयः येषां ते तथोक्ताः।

## स्नानविधिः

पैठीनसिः

मृतं मनसा ध्यायन् दक्षिणाभिमुखस्त्रीनुदकाञ्जलीन्निर्वपेत्। शावप्रभृत्येकादशेऽह्नि विरमेत्॥

बौधायनः [१, ११, २२]

मरणे तु यथाबालं पुरस्कृत्य यज्ञोपवीतान्यपसव्यानि कृत्वा तीर्थमवतीर्य सकृत् [1][सकृत्त्रिः] निमज्ज्य [उत्तीर्याचम्य] तत्-

(१) Words in brackets found in printed बौ. ध. सू.

प्रत्ययमुदकं प्रसिच्याऽत एवोत्तीर्य[१] आसते [आसीरन्]।

पारस्करः [३, १०, १३-२१]

संप्रयुक्तं मैथुनं वोदकं याचेरन्नुदकं करिष्यामह इति। कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते। कुरुध्वमित्येवेतरस्मिन्। [सर्वे] ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात्पुरुषाद् दशमाद्वा। [समानग्राम]वासे यावत्संबन्धमनुस्मरेयुः। एकवस्त्राः प्राचीनावीतिनः। सव्यस्यानामिकयाऽपनोद्यापनः शोशुचदघमिति। दक्षिणामुखा निमज्जन्ति। प्रेतायोदकं सकृत्प्रसिञ्चन्त्यञ्जलिनाऽसावेतत्त उदकमिति॥

'संप्रयुक्तं' सम्बन्धिनम्। 'मैथुनं' श्यालकम्॥

आपस्तम्बः [२, १५, २-१०][२]

मातुश्च योनिसंबन्धेभ्यः पितुश्चासप्तमात्पुरुषाद्यावता वा संबन्धो ज्ञायते तेषां प्रेतेषूदकोपस्पर्शनं गर्भान् परिहाप्यापरिसंवत्सरात्। मातापितरावेव तेषु। हर्तारश्च। भार्यायां परमगुरुसंस्थायां चाकालभोजनम्। आतुरव्यञ्जनानि कुर्वीरन्। केशान् प्रकीर्य पांसुनोऽप्येकवाससो दक्षिणामुखाः सकृदुपमज्ज्योत्तीर्योपविशन्ति। एवं त्रिः। तत्प्रत्ययमुदकमुत्सिच्याप्रतीक्षा ग्राममेत्य यत् स्त्रिय आहुस्तत्कुर्वन्ति। इतरेषु चैतदेवैक उपदिशन्ति॥[३]

(१) The following words in the printed work are omitted of here—आचम्य गृहद्वार्यङ्गारमुदकमिति संस्पृश्याऽक्षारलवणाशिनो दशाहं कटमासीरन्.

(२) Mss. Corrupt; reconstructed from printed text.

(३) Lacuna in आ ends here.

<u>याज्ञवल्क्यः</u> [३, ३–५]

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।
अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥

एवं मातामहाचार्यप्रेतानामुदकक्रिया ।
कामोदकं सखिप्रत्तास्वस्रीयश्वशुरर्त्विजाम् ॥

सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यतः ।
न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥

<u>शङ्खलिखितौ</u>

उदकक्रिया कामं श्वशुरमातुलयोः शिष्ये सहाध्यायिनि राजनि च ॥

[१]<u>बौधायनः</u> [१, ११,१–७]

सपिण्डेष्वादशाहमाशौचमिति जननमरणयोरधिकृत्य वदन्त्यृत्विग्दीक्षितब्रह्मचारिवर्जम् । सपिण्डता त्वासप्तमात् सपिण्डेषु। आसप्तमासादादन्तजननाद्वोदकोपस्पर्शनम् ॥

पिण्डोदकक्रिया प्रेते नाऽत्रिवर्षे विधीयते ।
आदन्तजननाद्वापि दहनं च न कारयेत् ॥

अप्रत्तासु च कन्यासु प्रत्तास्वेके ह कुर्वते ।
लोकसंग्रहणार्थं हि यदमन्त्राः स्त्रियो मताः ॥

(१) Manuscripts corrupt ; restored from printed texts.

पारस्करः [३, १०, ३९–४३]

आचार्ये चैवम् । मातामहयोश्च । स्त्रीणां चाप्रत्तानाम् । प्रत्तानामितरे कुर्वीरन् । ताश्च तेषाम् ॥

एवमिति । प्राचीनावीतित्वादिकर्तव्यताप्रेतस्नानोदकक्रियातिदेशः । 'मातामहयोः' मातामहानां चैतत्पत्नीनाञ्चेत्यतिदेशः ॥

---

# अथोदकानर्हाः

तत्र मनुः [५, ८९–९०]

वृथासंकरजातानां प्रव्रज्यासु च तिष्ठताम् ।
आत्मनस्त्यागिनां चैव निवर्तेतोदकक्रिया ॥

पाषण्डमाश्रितानां च चरन्तीनां च कामतः ।
गर्भभर्तृद्रुहां चैव सुरापीनां च योषिताम् ॥[१]

'आत्मनस्त्यागिनो' विधिव्यतिरेकेण स्वेच्छया देहत्यागिनः । वैधे तु देहत्यागे—

वृद्धः शौचक्रियालुप्तः प्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥

तत्र त्रिरात्रमाशौचं कर्तव्या चोदकक्रिया ।[२]
इति वचनाद्भवत्येवोदकादिक्रिया ॥

(१) जातशब्दः प्रत्येकमभिसम्बध्यते । 'वृथाजातो' यो न देवानर्चयति न पितॄन्न मनुष्यानिति । सत्यधिकारेऽनाश्रमी हुताहुतपरित्यक्तः । 'संकरजाताः' इतरेतरजातिव्यतिकरेण प्रतिलोमा आयोगवादयः । निन्दितत्वात् वृथाजातसाहचर्येण । अनुलोमास्तु नेह गृह्यन्ते । 'प्रव्रज्यासु' बाह्यासु भगालवरक्तपटाद्यासु (मेधातिथिः) ॥

(२) तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥
इति मेधातिथिनादृतः ।

यमः

वृथासंकरजाताश्च आश्रमान्तरिताश्च ये।
दत्तानां चैव कन्यानां निवर्तेतोदकक्रिया ॥
'आश्रमान्तरिताः' प्रव्रजिताः।

याज्ञवल्क्यः [३, ६]

पाखण्ड्यनाश्रिताः[१] स्तेना भर्तृघ्न्यः कामगादिकाः।
सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥

विष्णुः [२२, ५६–५८]

आत्मत्यागिनः पतिताश्च नाशौचभागिनः। पतितस्य दासो मृताहे पदापां घटमपवर्जयेत् ॥

'घटमपवर्जयेत्' प्रेतधिया घटं पादेनाऽपनुदेत्। एतेनासौ परिवर्जितो भवतीत्यर्थः।

हारीतः

यतिनामपविद्धानां चरन्तीनां च कामतः।
दत्तानां चैव कन्यानां निवर्त्या सलिलक्रिया ॥
'अपविद्धाः' ज्ञातिबहिष्कृताः।

गौतमः [१०, १४; २]

यस्य [तु] प्राणान्तिकं प्रायश्चित्तं स मृतः शुध्येत्। सर्वाण्युदकादीनि प्रेतकर्माणि कुर्युः ॥

(१) 'अनाश्रिता' अधिकारे सत्यपि अकृताश्रमविशेषपरिग्रहाः। 'कामगाः' कुलटाः। 'आदि' ग्रहणात् स्वगर्भब्राह्मणघातिन्यो गृह्यन्ते ॥ (मिताक्षरा) ॥

बृहस्पतिः [प्राय., ८४]

विषोद्बन्धनशस्त्रेण आत्मानं यो हि घातयेत् ।
प्रेतोऽमेध्येन लेप्तव्यो नान्यं संस्कारमर्हति ॥

पराशरः [४, ४–५]

गोभिर्हतं तथोद्बद्धं ब्राह्मणेन च घातितम् ।
तं स्पृशन्ति च ये विप्रा वोढारश्चाऽग्निदाश्च ये ॥
अनुगच्छन्ति ये चान्ये ये चान्ये [१]पाशभेदकाः ।
सर्वे ते पापसंयुक्तास्तेषां वक्ष्यामि निष्कृतिम् ॥

याज्ञवल्क्यः [३, ५–६]

न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ॥
[२]पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।

[वृद्धमनुः]

क्लीबाद्या नोदकं कुर्युः [३]स्तेना व्रात्या विधर्मिणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

मनुः [५, ८८; ९१]

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेणैव शुध्यति ॥

(१) पाशभेदकाः—उ; पाशच्छेदकाः—आ.

(२) Our manuscripts have combined the last quarter of the s'loka from याज्ञवल्क्य with the first quarter of the s'loka of Vṛddha-Manu, and wrongly ascribe the whole to Yājñavalkya. The *Mitākṣarā* ascibes the second s'loka to Vṛddha-Manu.

(३) न व्रात्या न विकर्मिणः—आ.

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥

'आदिष्टी' आदिष्टं व्रतं यस्यास्ति ।

याज्ञवल्क्यः [३, १५]

आचार्यपित्रुपाध्यायान् निर्हृत्यापि व्रती व्रती ।
सकटान्नं च नाश्नीयान्न च तैः सह संवसेत् ॥

'सकटान्नं' अशौचान्नम् ।

वसिष्ठः [२३, ५]

ब्रह्मचारिणश्शवकर्मणि व्रतान्तनिवृत्तिरन्यत्र मातापित्रोः ॥

बौधायनः [२, १, २४]

ब्रह्मचारिणश्शवकर्मणा व्रतावृत्तिरन्यत्र मातापित्रोराचार्याच्च ॥

---

# अथ शोकापनोदनम्

तत्र याज्ञवल्क्यः [३, ७-११]

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥

मानुष्ये कदलीस्तम्भनिःसारे सारमार्गणम् ।
करोति यः स संमूढो जलबुद्बुदसंनिभे ॥

पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥

गन्त्री वसुमती नाशमुदधिर्दैवतानि च ।
फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति ॥

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
अतो न रोदितव्यं हि क्रियाः कार्याः [१]स्वशक्तितः ॥

बृहस्पतिः [आशौ., १४-१८]

उपविष्टाः शुचौ देशे [२]बान्धवास्तदहश्च तान् ।
आश्वसेयुः पुराख्यानैरितिहासैः पुरातनैः ॥

(१) प्रयत्नतः—उ; 'स्वशक्तितः' इति मिताक्षरादृतपाठः।

(२) बान्धव सुहृदश्च तान्—आ.

नहुषाद्या नृपतयः ऋषयश्च तपोधनाः ।
याताः कालवशं मर्त्ये का कथा बुद्बुदोपमे ॥

आक्रन्दाश्रुप्रपाताश्च मृतस्यानुपकारकाः ।
एवं विदित्वा मतिमान् कश्मलं परिवर्जयेत् ॥

नाक्रन्दितं भवेच्छ्लाघ्यं सदा शोके कदाचन ।
क्रियाऽपि कुरुते साह्यं नास्ति शोके सहायता ॥

तस्मात् कुल्यैः सपिण्डैश्च सुहृत्संबन्धिबान्धवैः ।
मृतस्य सलिलं देयमुपकाराय [१]तस्य तत् ॥

रामायणे[२]

शोचमानास्तु संस्नेहाद्बान्धवाः सुहृदस्तथा ।
पातयन्ति गतं स्वर्गादश्रुपातेन राघव ॥

श्रूयते हि नरव्याघ्र पुरा परमधार्मिकः ।
भूरिद्युम्नो गतः स्वर्गं राजा पुण्येन कर्मणा ॥

स पुनर्बन्धुवर्गस्य शोकबाष्पेण राघव ।
कृत्स्ने वै व्युषिते धर्मे पुनः स्वर्गान्निपातितः ॥

अतिशोकानले दग्धः पिता [३]ते स्वर्गतः प्रभुः ।
[४]शपेत्त्वां मन्युनाविष्टः तस्मादुत्तिष्ठ राघव ॥

(१) यस्य तत्—अ.

(२) Entire quotation confused in ड. Not traceable.

(३) स्वर्गगतः प्रभुः—ड.

(४) शपित्वा त्वां—आ.

तथा

संयोगेऽभिमते तेषां वियोगः कथमप्रियः ।
संयोगो हि वियोगेन ग्रस्त एवोपजायते ॥

महाभारते

किं नु शोचसि मूढस्त्वं शोच्यः किमनुशोचसि ।
यदा त्वामनुशोचन्तः शोच्या यास्यन्ति तां गतिम् ॥
अदर्शनादापतितः पुनश्च दर्शनं गतः ।
न त्वसौ वा[1] न वा त्वं तु ततः [2]किमनुशोचसि ॥
नायमत्यन्तसंवासः कस्यचित् केनचित् सह ।
अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैः ॥
अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥[3]
देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥[4]

तथा

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥

(१) न त्वासौ—अ.
(२) कमनुशोचसि—अ.
(३) भगवद्गीता, २, २८.
(४) भगवद्गीता, २, १३.

[1]विष्णुः [२०, २८-५१]

आक्रम्य सर्वः कालेन परलोकं च नीयते ।
[2]कर्मपाशवशो जन्तुस्तत्र का परिदेवना ॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
अर्थे दुष्परिहार्येऽस्मिन् नास्ति [3]लोके सहायता ॥
शोचन्तो नोपकुर्वन्ति मृतस्येह जना यतः ।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः ॥
सुकृतं दुष्कृतं चैव सहाये यस्य गच्छतः ।
बान्धवैस्तस्य[4] किं कार्यं शोचद्भिरथवा न वा ॥
बान्धवानामशौचे तु स्थितिं प्रेतो न विन्दति ।
अतस्त्वभ्येति [5]तानेव पिण्डतोयप्रदायिनः ॥
अर्वाक् सपिण्डीकरणात् प्रेतो भवति यो मृतः ।
पितृलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ॥
[6]पितृलोकगतश्चान्नं श्राद्धे भुङ्क्ते [7]सुधासमम् ।

(१) The long quotation from *Viṣṇusmṛti* is given in a currupt form by the manuscripts. The text is reconstucted by comparison with that followed by Nandapaṇḍita, but retaining distinct variants, which denote more intelligibility.

(२) कर्मपथ्यार्दनो (?)—अ, आ, उ.

(३) शोको महात्मनाम्—उ, अ.

(४) तत्र—अ, उ.

(५) तान्येव पिण्डं तोयप्रदार्थिनः—उ, अ.

(६) पितुर्लोकगतश्चान्नं—आ; s'loka missing in उ, अ.

(७) 'स्वधासमम्'–इति नन्दपण्डितेनादृतः पाठः। "श्राद्धे पार्वणादौ पुत्रादिदत्तं अन्नपानादि 'स्वधया' पितृभोग्येन अमृतविशेषेण 'समं' तुल्यं भुङ्क्ते।" (वैजयन्ती)

पितृलोकगतस्यास्य तस्माच्छ्राद्धं प्रयच्छत ॥
देवत्वे [1]यातनास्थाने तिर्यग्योनौ तथैव च ।
मानुषे च तथाप्नोति श्राद्धं दत्तं स्वबान्धवैः ॥
प्रेतस्य श्राद्धकर्तुश्च पुष्टिः श्राद्धे [2]कृते ध्रुवम् ।
तस्माच्छ्राद्धं सदा कार्यं शोकं त्यक्त्वा निरर्थकम् ॥
एतावदेव कर्तव्यं सदा प्रेतस्य बन्धुभिः ।
नोपकुर्यान्नरः [3]शोकं प्रेतस्यात्मन एव च ॥
दृष्ट्वा लोकमनाक्रन्दं म्रियमाणांश्च बान्धवान् ।
धर्ममेव [4]सहायार्थं [5]वर्धयध्वं सदा नराः ॥
मृतोऽपि बान्धवः शक्तो नानुगन्तुं मृतं नरम् ।
[6]जायावर्जं हि सर्वस्य याम्यः पन्थाः [7]प्रभिद्यते ॥
धर्म एकोऽनुयात्येनं यत्र क्वचन गामिनम् ।
नन्वसारे नृलोकेऽस्मिन् धर्मं कुरुत मा चिरम् ॥
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः [8]कृतमस्य न वाकृतम् ॥
क्षेत्रापणगृहासक्तमन्यत्र गतमानसम् ।
[9]वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥

(१) यातनास्थेऽपि—उ, अ.
(२) कृते यतः—उ, अ.
(३) शोचन्—मु. विष्णु
(४) महासत्वे—उ.
(५) वरयध्वं—मु. वि.
(६) यावद्देहं—उ.
(७) विभिद्यते—अ. विरुध्यते—मु. वि.
(८) सुकृतमस्य न वा कृतम्—अ.
(९) वृकी योऽरणमादाय—अ.

न कालस्य प्रियः कश्चिद्द्वेष्यश्चाऽपि न विद्यते ।
[१]मानुष्ये कर्मणि क्षीणे प्रसह्य हरते जनम् ॥
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
कुशाग्रेणाऽपि संस्पृष्टः प्राप्तकालो न जीवति ॥

नौषधानि न मन्त्राणि न होमो न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम् ॥
आगामिन[२]मलङ्घ्यं हि प्रतिघातशतैरपि ।
न निवारयितुं शक्तस्तत्र का परिदेवना ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारं विन्दते ध्रुवम् ॥

[३]अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥[४]

[५]नवं गृह्णातीह वस्त्रं त्यक्त्वा पूर्वधृतं नरः ।
गृह्णात्येवं तथा देहं देही कर्मनिबन्धनम् ॥

(१) आयुष्ये—अ.

(२) मनर्थं—मु. वि.

(३) The two s'lokas begining here are brought in here by आ—भगवद्गीता, २, २८.

(४) भगवद्गीता, २, ३०.

(५) Supplied by अ and आ; missing in उ; गृह्णातीह यथा वस्त्रं—मु. वि.

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥[१]

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेशयन्त्यापो न शोषयति मारुतः ॥[२]

---

(१) Missing in आ and मु. लि; भगवद्गीता, २, २१

(२) भगवद्गीता, २, २३.

# अथ वेश्मप्रवेशनम्

तत्र याज्ञवल्क्यः [३, १२-१४]

इति [1]संश्रुत्य गच्छेयुर्गृहं बालपुरस्सराः ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥
आचम्याग्न्यादि सलिलं[2] गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः ॥

हारीतः

अनुकनीयांसं ज्येष्ठप्रथमाः प्रत्यायान्ति । न प्रेतस्पर्शिनो ग्राम[3] प्रविशेयुरानक्षत्रदर्शनात् । रात्रौ चेदादित्यस्य । ब्राह्मणानुमताद्वा । कार्ष्णायसपाणयोऽधश्शायिनोऽध उपवेशिन एकं पिण्डमुदकाञ्जलिं च निरस्य पाणिषु मृन्मयेषु [4]पर्णपुटेषु वाऽश्नीरन् ॥

आश्वलायनः [४, ४, १०-१७]

आसत आनक्षत्रदर्शनात् । आदित्यस्य वा मण्डले [5]दृश्यमाने प्रविशेयुः । [6]कनिष्ठप्रथमा ज्येष्ठजघन्याः प्राप्यागारमश्मानमग्निं

(१) संचिन्त्य—अ; संश्रुत्य—आ, उ, मिताक्षरा.

(२) उदकं—आ,

(३) ग्रामं प्रविशेत् । पुरानक्षत्रदर्शनात्—अ.

(४) मृन्मयेषु पूर्णपत्रपुटेषु वाऽश्नीरन्—आ; हारलताऽऽहृतपाठश्च (p. 158)

(५) आदित्यस्य वा दृश्यमाने—उ.

(६) ज्येष्ठपुरःसराः कनिष्ठजघन्या निःसृत्य कनिष्ठपुरःसरा ज्येष्ठजघन्याः प्रविशेयुः—हारलता, १५६.

गोमयमक्षतं तैलं माषमप उपस्पृशन्ति। नैतस्यां रात्र्यामन्नं पचेरन्। [क्रीतोत्पन्नेन वा वर्तेरन्।] त्रिरात्रमक्षारलवणाशिनस्स्युः। [1]द्वादशरात्रं वा महागुरुषु ॥

पारस्करः [३, १०, २३–२८]

अनवेक्षमाणा ग्राममायान्ति रीतीभूताः कनिष्ठपूर्वाः निवेशनद्वारे पिचुमन्दपत्राणि विदश्याऽऽचम्योदकमग्निं गोमयं गौरसर्षपांस्तैलमालभ्याश्मानमाक्रम्य प्रविशन्ति। [त्रिरात्रं] ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्युर्न प्रकुर्वीरन्। क्रीत्वा लब्ध्वा वा दिवा [एव] अन्नमश्नीयुरमांसम्। प्रेताय पिण्डं दत्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम्। मृन्मये तां रात्रिं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहीति ॥

'न प्रकुर्वीरन्' नारभेरन् ॥

[2]शङ्खलिखितौ

उत्तीर्य प्रेतस्पृष्टानि वासांस्युत्सृज्येतराणि परिधाय गृहद्वारे तस्मै प्रेताय पिण्डं दत्वा पश्चाद्दूर्वाप्रवालान् गोमयमग्निं जलं वृषभमालभ्य प्रविशन्तो घृतगौरसर्षपैर्मूर्धानमङ्गानि वाऽऽलभेरन्। शस्त्रपाणयो यथोक्तकालनियमाः प्रेतायावश्यकान्युभयकालं कुर्युः।

(१) द्वादशरात्रं वा महागुरुषु—अ.

(२) The manuscripts are corrupt in the quotations which follow. They are cited in *Hāralatā*, pp. 154—157 and it has been helpful in the restoration of the text.

भूमौ माल्यं पिण्डं पानीयमुपलेपनानि वा दद्युः। तत्कालमन-ध्यायो गोत्रतः पर्युपासनं च ॥

बैजवापः

शमीमालभन्ते शमी पापं शमयत्वित्यश्मानमालभन्तेऽश्मवत् स्थिरो भूयासमग्निर्नः शर्म यच्छत्विति। द्योगित्यन्तरा गामजं चोपस्पृशन्तः क्रीत्वा लब्ध्वा वा गृहं प्राप्यैकान्नमलवणमेकां रात्रिं भुञ्जीरन्। त्रिरात्रं च कर्मोपरमणम् ॥

बौधायनः [१, ११, २२–२४]

गृहद्वार्यङ्गारमुदकमिति संस्पृश्याक्षारलवणाशिनो दशाहं कट-मुपासीरन्। एकादश्यां द्वादश्यां च श्राद्धकर्म। शेषक्रियायां लोको-ऽनुरोद्धव्यः ॥

'कटः' तृणप्रस्तरः। 'द्वादश्यां वा' इत्यसंभवापेक्षो विकल्पः। 'शेषक्रियायां' मङ्गलाचरणादौ ॥

वसिष्ठः [४, १४–१५]

गृहं व्रजित्वा प्रस्तरे त्र्यहमनश्नन्त आसीरन्। [अशक्तौ] क्रीतोत्पन्नेन वा वर्तेरन् ॥

याज्ञवल्क्यः [३, १६–१८]

[१]क्रीतलब्धाशना भूमौ स्वपेयुस्ते [२]पृथक् क्षितौ।

(१) Lacuna in आ begins here, a leaf being lost.

(२) पृथक् पृथक्—ग, अ, आ, मिताक्षरा

पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ॥
जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ।

अङ्गिराः

श्मशानवासिनो देवाः शवानां परिकीर्तिताः ।
येषां यागनिमित्ताय प्रेतशुद्धिरुदाहृता ॥
यदि तेषां न संसिद्धिः प्रेतमुद्दिश्य कर्हिचित् ।
क्रियते यजनं वापि ततस्तेऽत्र शपन्ति तान् ॥
तस्मान्न बन्धुभिः शोकः कार्यः कार्योदकक्रिया ।

ब्रह्मपुराणे

ब्रह्मचर्या क्षितौ वासो वर्ज्यं मांसं न संचितैः ।
भूमौ पिण्डप्रदानं च कर्षूं कृत्वा विधानतः ॥
गन्धमाल्यैस्ततोऽर्चा च ततो भोजनमिष्यते ।

मनुः [५, ७३]

अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ।
मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥

बृहस्पतिः [आशौ., १९]

अधश्शय्यासना दीना मलिना भोगवर्जिताः ।
अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥

गौतमः [१४, ३५–४०]

अधश्शय्यासनिनो ब्रह्मचारिणस्सर्वे । न मार्जयीरन् । मांसं न भक्षयेयुराप्रदानात् । प्रथमतृतीय[पञ्चम]सप्तमनवमेषूदकक्रिया । वाससां च त्यागः । अन्ते त्वन्त्यानाम् ॥

'न मार्जयीरन्' उज्वलवेषधारिणो न भवेयुरित्यर्थः। आप्र-दानात्' आश्राद्धकरणात्। 'अन्ते त्वन्त्यानां' नवमशौचान्त इति भर्तृयज्ञः॥[१]

सुमन्तुः

प्रेताय नजलं देयं दग्ध्वा तद्गोत्रजैर्बहिः।
प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा॥

बृहस्पतिः [आशौ., २०]

प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे दिने।
नवमे वा समं त्यागो नखलोम्नां वृथान्तिके॥

मार्कण्डेयपुराणे

तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं ततः।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः॥[२]

महाभारते

[३]सतिलं घृतपानीयं दीपं ददत जागृत।
ज्ञातिभिः सह मोदध्वमेतत्प्रेतेषु दुर्लभम्॥

आश्वलायनगृह्यपरिशिष्टे

नवश्राद्धं दशाहानि यवमिश्रं तु षड्तून्।
अतः परं पुराणं च त्रिविधं श्राद्धमुच्यते॥

(१) The comments are verbally identical with those in मस्करिभाष्य. (२) Lacuna in आ ends here.

(३) 'तिलान् ददत पानीयं दीपान् ददत जाग्रत' इति हारलता (पृ. १६०).




यस्मिन्नवे पुराणे वा विश्वेदेवा न लेभिरे।
तदासुरं भवेच्छ्राद्धं वृषलं मन्त्रवर्जितम्॥
अनूदकमधूपं च गन्धमाल्यविवर्जितम्।
निनयेदश्मनि पूर्वं ततः श्राद्धं प्रकल्पयेत्॥

पश्चाच्च निनयेत्पिण्डं तस्मिन्नेव यथाविधि।
[1]असगोत्रः सगोत्रो वा स्त्री दद्याद्यदि वा पुमान्॥

प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्॥[2]

[3]यथा हारीतः

अन्यगोत्रोऽथ सम्बन्धी प्रेतायाग्निं ददाति यः।
उदकं पिण्डदानं च स दशाहं समापयेत्॥

'वैरमणे' इत्यनुवृत्तौ, अनध्यायेषु—

आपस्तम्बः [१, १०, ४–९][4]

मातरि पितर्याचार्य इति द्वादशाहाः। तेषु चोदकोपस्पर्शनं तावन्तं कालम्। अनुभाविनां च परिवापनम्। न समावृत्ता वपेरन्नन्यत्र विहारादित्येके। अथापि ब्राह्मणम्—रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति। सत्रेषु वचनाद्वपनं शिखायाः॥[5]

(१) Not traced. (२) Lacuna in आ begins here.

(३) This citation is missing in Udaipur manuscript.

(४) Manuscripts corrupt; restored from the text followed by the *Ujjvala*.

(५) 'अनुभाविनः' मृतापेक्षयाऽवरवयसः। अपर आह—'अनुभाविनः' उदकार्हाः तेषां मरणे परिवापनमिति सह शिखया वापनप्रतिषेधपरम्। सत्रेषु शिखाया वपनं वचनसामर्थ्यात्॥ (उज्ज्वला)

हारीतः

त्रिपञ्चसप्तरात्रेषु स्नायीरन्। नवमेऽहनि वासांसि शौचाय दद्युः। [1]दशमेऽहन्यरण्यं गत्वा कृतश्मश्रुकर्माणः स्पृष्टान्युत्सृज्य तिलकल्कावघृष्टा गौरसर्षपैः शिरःस्नाता अहतवाससः [2]शुक्लवाससो वा अश्माविष्टा गोहिरण्यादीन्यालभ्य प्रविशेरन्। शान्तिं कृत्वा श्वोभूत एकोद्दिष्टं प्रदाय स्वस्त्ययनादिधर्मार्थान् प्रवर्तयन्ति। त्रिविधा कुलशुद्धिराचारादाम्नायात्कृत्याच। आचारो नाम लोकसिद्धो वेदसिद्ध आम्नायो व्यवहारादिना लोके व्याख्यातं [3]कृत्यशौचमिति॥

विष्णुः [१९, १८-२३]

ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कैर्वा स्नाताः परिवर्तितवाससो गृहं प्रविशेयुः। तत्र शान्तिं कृत्वा ब्राह्मणानां च पूजनं कुर्युः। देवाः परोक्षदेवाः प्रत्यक्षदेवा ब्राह्मणाः। ब्राह्मणैर्लोका धार्यन्ते॥

ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः।
[4]ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्॥

(१) 'आ' मातृकायां 'दक्षः—दशमे' इत्यस्ति,
(२) शुक्लवर्णवाससो—ब
(३) कुलशौचमिति—अ.
(४) ब्राह्मणैर्निहितं वाक्यं न मिथ्या कारयेत् क्वचित्—उ.

यद्ब्राह्मणास्तुष्टतमा वदन्ति
तद्देवताः [१]प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति
प्रत्यक्षदेवेषु परोक्षदेवाः ॥

पैठीनसिः

श्वोभूतेऽग्निमुपसमाधाय शान्त्युदकं कुर्यात्। शन्नो देवीरिति सूक्तेन प्रथमम्। द्वाभ्यां द्वितीयं [२]शन्नो देवीरग्नये न इति। शन्न इन्द्राग्नीति तदस्तु मित्रा वरुणा इति तृतीयम्। शन्नो धाता इन्द्र जीव यस्मात् कोशात् पृथिवी शान्तिरिति चतुर्भिश्चतुर्थकम्। उभयत्र सर्वत्र सावित्रीं कुर्यात्। तृतीये शर्करां कुलुत्थं च सव्येनाचम्य निष्ठीवेत्। विवस्वानिन्द्रमित्युक्तम्। दशरात्रे केशश्मश्रुलोमनखानि वापयित्वाऽऽत्मनः शान्तिनिमित्तं शान्त्युदकं कुर्यात्। अयुग्मान् ब्राह्मणान् भोजयेत् ॥

'प्रथमम्' इत्यादौ 'शान्त्युदकं कुर्याद्' इति सम्बन्धः। 'द्वाभ्यां' वक्ष्यमाणमन्त्राभ्याम्। 'सव्येनाचम्य' वामहस्तेनास्वाद्य ॥

तत्र श्लोकौ—

कर्ता न विद्यते प्रेते यदा सूतककर्मणि ।
दशरात्रोषितः स्नात्वा कुर्याच्छान्त्युदकं स्वयम् ॥

(१) कर्मभिराचरन्ति—उ.

(२) शन्नो देवीरभिष्टये (ऋ. सं., १०, ९, ४) शन्न इन्द्राग्नी (ऋ. सं., ७, ३५, १) तदस्तु मित्रावरुणा तदग्ने (ऋ. सं., ५,४७, ७) 'शन्नो धाता' (ऋ. सं., ७, ३५, ३) इन्द्र जीव (अ. वे., १३, ७, १) पृथिवी शान्तिः (अ. वे., १९, ९, १४) यस्मात्कोशात् (अ. वे., १९, ७२, १)

14

यस्येह कर्ता शक्तश्चेत् त्रिरात्रं मारुताशनः ।
स्नात्वा चतुर्थे दिवसे ततः शान्तिं समाप्नुयात् ॥

मनुः [५, ९९]

विप्रः शुध्येदपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मींश्च यष्टिं शूद्रः कृतक्रियः ॥

देवलः

अथाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः ।
आशुच्याद्विप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च ॥

---

# अथास्थिसञ्चयनम्

तत्र विष्णुः [१९, १०-१२]

चतुर्थे दिवसेऽस्थिसंचयनं कुर्युः। तेषां च गङ्गाम्भसि प्रक्षेपः।

[१]यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति।

तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

कात्यायनः [श्रौतसूत्र, २९, ८, १-८]

सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे[२] प्रास्यति[३]। [शम्यवकाः कर्दमं च श्मशाने।] अक्त्वास्थीनि सुरभिचन्दनादिना सिक्त्वा दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृतं च हरिद्रं वागिति निवपत्यस्मिन्। एतद्वाजसनेयकम्। अनेन वा। त्वा मनसार्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपां रसेन निवपाम्यसाविति। श्मशानं चिकीर्षतः कुम्भे सञ्चयनम्। निधानं च तूष्णीम्॥[४]

(१) The printed *Viṣṇusmṛti* reads. यावत्संख्यमस्थि पुरुषस्य गङ्गाम्भसि तिष्ठति तावद्वर्षसहस्राणि स्वर्गलोकमधितिष्ठति॥

(२) पलाशपत्रे—उ; पलाशपत्रपुटे—अ.

(३) कृत्वा—अ, उ;

(४) The third Sūtra is thus given in Vidyādhara Gauḍa's edn.:—अक्त्वाऽस्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृते च हारिद्रे वागिति निवपत्यस्मिन्॥

[1]छन्दोगपरिशिष्टे कात्यायनः [गोभिलस्मृतिः, ३, ५४-५८]

अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत् ।
यस्तत्र विधिरादिष्ट ऋषिभिः सोऽधुनोच्यते ॥

स्नानान्तं पूर्ववत्कृत्वा गव्येन पयसा ततः ।
सिञ्चेदस्थीनि सर्वाणि प्राचीनावीत्यभाषयन् ॥

शमीपलाशशाखाभ्यामुद्धृत्योद्धृत्य भस्मनः ।
आज्येनाभ्युक्ष्य गव्येन सेचयेद्गन्धवारिणा ॥

मृत्पात्रसंपुटे कृत्वा सूत्रेण परिवेष्टयेत् ।
श्वभ्रं खात्वा शुचौ भूमौ निखनेद्दक्षिणामुखः ॥

पूरयित्वावटं पङ्कं पिण्डं शैवालसंयुतम् ।
दत्वोपरि समं शेषं कुर्यात्पूर्वाह्णकर्मणा ॥

एष एवागृहीताग्नेः प्रेतस्य विधिरुच्यते ।
स्त्रीणामिवाग्निदानं स्यादथाऽतोऽनुक्तमुच्यते ॥

[2]आश्वलायनगृह्यम् [४, ६, १–८]

संचयनमूर्ध्वं दशम्याः कृष्णपक्षस्यायुजास्वेकनक्षत्रे । अलक्षणे कुम्भे पुमांसम् । अलक्षणायां स्त्रियम् । अयुजोऽमिथुनाः प्रवयसः । क्षीरोदकेन शमीशाखया त्रिः प्रसव्यमायतनं परिव्रजन् प्रोक्षति शीतिके शीतिकावतीति । अङ्गुष्ठोपकनिष्ठिकाभ्यामेकैकमस्थ्य-

(१) Mss. Corrupt; text reconstructed.
(२) Mss. Corrupt; text reconstructed from *Anāvila*.

संह्लादयन्तोऽवदध्युः । पादौ पूर्वं शिर उत्तरम् । सुसंचितं संचित्य पवनेन संपूय ॥[१]

ब्रह्मपुराणे

स्नात्वा त्रिरात्रं कुर्वन्ति प्रेतायोदकतर्पणम् ।
श्मशानदेवतायागं[२] चतुर्थदिवसे ततः ॥
भवन्ति पूजिता यस्मात् तत्रस्थाः शङ्करादयः ।
स्नातैः सुधौतवस्त्रैश्च श्मशानस्य समीपगैः ॥
स्वजातिविहितैर्द्रव्यैर्यथाशक्त्या समाहितैः ।
मृन्मयेषु च [३]भाण्डेषु कृत्येषु चरुकेषु च ॥
[४]सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा ।
फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ॥
कैश्चिदर्घ्यं प्रदातव्यं कैश्चित्पुष्पं च शोभनम् ।
धूपो दीपस्तथा माल्यं कैश्चिद्देयं त्वरान्वितैः ॥
पात्राणि परिपूर्णानि श्मशानाग्नेः समन्ततः ।
कैश्चिद्देयानि सर्वाणि यानीहाभ्युक्षितानि च ॥
निवेदयति वक्तव्यं तैः सर्वैः समलङ्कृतैः ।
नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥

(१) अलक्षणयुक्ते कुम्भे पुंसोऽस्थीनि संचिन्वीरन्, अलक्षणायां कुम्भ्यां स्त्रियो अस्थीनि ।' क्षीरोदकं' क्षीरमिश्रोदकम् । संह्लादः' शब्दः, उपकनिष्ठिका' अनामिका । पादास्थीनि पूर्वमवदध्युः । चरमं 'शिरः' कपालम् । 'पवनेन' शूर्पादिजन्येन 'संपूय' भस्मपांसूंश्च संशोध्य ॥ (अनाविला)

(२) यानं—उ ; यागं—आ, अ. (३) भाण्डेष्वभिन्नेषु नूतनेषु च—उ.

(४) सुपक्वैः—अ ; अपक्वैः—उ, आ.

येऽस्मिन् श्मशाने देवाः स्युर्भगवन्तः सनातनाः ।
तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥

प्रेतस्यास्य शुभांल्लोकान् संप्रयच्छन्तु शाश्वतान् ।
अस्माकमायुरारोग्यं सुखं च ददतां वरम् ॥

[1]एवं दत्वा बलीन् सर्वान् क्षीरेणाभ्युक्ष्य वाग्यतैः ।
विसर्जनं तु देवानां कर्तव्यं च समाहितैः ॥

ततो [2]यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः ।
अपसव्यं क्रमाद्गृत्रं धृत्वा कश्चित् सगोत्रजः ॥

प्रेतस्यास्थीनि कृत्स्नानि प्रधानाङ्गोद्भवानि च ।
पञ्चगव्येन संस्नाप्य क्षौमवस्त्रेण वेष्ट्य च ॥

प्रक्षिप्य मृन्मये भाण्डे नवे साच्छादने शुभे ।
अरण्ये वृक्षमूले वा शुद्धे संस्थापयेदिति ॥

ततः स्थानाच्च शनकैर्नीत्वा तज्जाह्नवीजले ।
कश्चित् क्षिपति तच्छीघ्रं दौहित्रो वा सहोदरः ॥

[3]गृहीत्वास्थीनि तद्भस्म नीत्वा तोये विनिक्षिपेत् ।
ततः संमार्जनं भूमेः कर्तव्यं गोमयाम्बुभिः ॥

पूजा च पुष्पधूपाद्यैर्बलिभिः पूर्ववत्क्रमात् ।
भूमेराच्छादनार्थं तु वृक्षः पुष्करकोऽथवा ॥

(१) This line and the next two are omitted in आ.

(२) यज्ञीयवृक्ष—अ.

(३) गृहीत्वास्थीनि तद्भस्म—अ ; गृहीत्वा भस्मशकलं—उ,

पट्टको वा प्रहर्तव्यस्तत्र सर्वैः सबन्धुभिः ।
ततः सचैलं स्नानं तु कर्तव्यं तैर्विधानतः ॥

तथा

क्वचित् तृतीये विप्रस्य चतुर्थे क्षत्रियस्य तु ।
पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि ॥
अस्थ्नां तु संचयः प्रेते क्रियते देशगौरवात् ।
जीवतामपि वर्णानां संस्पर्शो चाप्ययं क्रमः ॥
चतुर्थे ब्राह्मणानां च पञ्चमे भूभृतामपि ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥
कर्तव्यं तु नरैः श्राद्धं देशकालाविरोधतः[१] ।
सपिण्डाश्च सजातीयास्तथाप्यन्ये बुभुक्षिताः ॥
[२]दीना अनाथाः कृपणास्तत्रान्नमपि भुञ्जते ।

तथा

त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वस्थिसञ्चयः ।
सद्यःशौचे तत्क्षणं तु कर्तव्यमिति निश्चयः ॥

तथा

अस्थीनि मातापितृपूर्वजानां
नयन्ति गङ्गाम्भसि ये कदाचित् ।

(१) देशकालानिरोधतः—उ.

(२) दीनानाथान्धकृपणाः तत्रान्नमुपभुञ्जते—आ.

[1]सद्भावयुक्ता हि दयाभिभूता-
स्तेषां तु तीर्थानि फलप्रदानि[2] ॥

कुलद्वयं वाप्यथ वर्जयित्वा
मातापित्रोर्जन्मभूम्याश्रितं च ।
अस्थीनि चान्यस्य वहंश्च विप्रो[3]
भाग्यक्षयं लभते दुष्कृतं च ॥
भागीरथीतीरमवाप्य तत्र[4]
त्वस्थीनि चादाय कुलद्वयस्य ।
प्रक्षेप्तुकामः पुरुषोऽथ भक्त्या
भागीरथीं वीक्ष्य विशुद्धिमाप ॥
स्नात्वा ततः पञ्चगव्येन सिक्त्वा
पुष्पैस्तिलैर्गन्धधूपादिभिश्च ।
संयोज्य मृत्पिण्डपुटे निधाय
पश्यन् दिशं प्रेतगणोपगूढम् ॥
नमोस्तु धर्माय[5] वदन् प्रविश्य
जलं स मे प्रीत इति क्षिपेच्च ।
उत्थाय भास्वन्तमवेक्ष्य सूर्यं
सदक्षिणं विप्रमुखाय दद्यात् ॥

(१) सद्भावकस्यातिदयाभिभूताः—अ, आ.
(२) ते यान्ति तीर्थान्यफलान्यशेषम्—उ.
(३) वहन् हि विप्रो—अ, आ.
(४) भागीरथी यत्र यत्रापतीर्थे कुलद्वये कोऽपि यदा विपन्नः ।
तदा तदा तस्य तस्याथ भक्त्या भावेन चास्थीनि विनिक्षिपेद्वा ॥ —आ.
(५) विप्राय—अ, उ.

**एवं कृते प्रेतपुरि स्थितस्य**
**स्वर्गे गतिः स्याच्च महेन्द्रतुल्या ॥**

**तथा**

**मातुः कुलं पितृकुलं वर्जयित्वा नराधमः ।**
**अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणं चरेत् ॥**

[1]इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन **भट्टश्रीमल्लक्ष्मीधरेण**
विरचिते **कृत्यकल्पतरौ**
[2]**कुलशुद्धिः ॥**

---

(१) आ.
(२) शुद्धिकाण्डः—अ.; 'इति भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ कुलशुद्धिः—उ.

# अथ शरीरशुद्धिः

तत्र मनुविष्णू[१]

ज्ञानं तपोऽग्निराहारो मृन्मनो वार्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धेः कर्तॄणि देहिनाम् ॥
सर्वेषामपि शौचानामर्थशौचं[२] परं स्मृतम् ।
योऽर्थे[३] शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥
क्षान्त्या शुध्यन्ति विद्वांसो दानेनाकार्यकारिणः ।
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥
[४]शोध्यं शुध्यति मृत्तोयैर्नदी वेगेन शुध्यति ।
रजसा स्त्री मनोदुष्टा संन्यासेन द्विजोत्तमः ॥
अद्भिर्गात्राणि शुध्यन्ति मनः सत्येन शुध्यति ।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ॥[५]

(१) मनु, ५, १०५–१०९; विष्णु, २२. ८८–९२.

(२) 'अन्नशौचं' इति विष्णुपाठः ।     (३) 'योऽन्ने'—वि.

(४) 'मृत्तोयैः शोध्यते शोध्यं' इति मुद्रितमनुविष्णू.

(५) अत्र वैजयन्ती—'ज्ञानं' आध्यात्मिकं बुद्धेः शुचिहेतुः । 'आहारः' पञ्चगव्यादीनाम् । 'कर्म' सन्ध्यादि अहोरात्रकृतपापस्य । योऽन्ने शुचिः शुच्यन्नादः स शुचिः । अर्थशौचमिति पाठेऽपि आहारशुद्ध्यर्थमेवार्थशौचापेक्षेति । 'अकार्यं' निषिद्धं, तत्कारिणः । 'शोध्यं' अमेध्यादिलिप्ताङ्गम् । 'द्विजोत्तमः' ब्राह्मणः । 'गात्राणि' शरीराणि लिप्तान्यद्भिः स्नानैः शुध्यन्ति । 'मनः' सङ्कल्पात्मकमसत्सङ्कल्पादशुद्धं 'सत्येन' सत्सङ्कल्पेन शुध्यति । 'विद्यातपोभ्यां' शुद्धिः शरीराभिमानजन्यदुरितनिवृत्तिः । 'बुद्धिः' संशयविपर्ययात्मिका । 'ज्ञानेन' प्रमारूपेण ॥

'ज्ञानं' आध्यात्मिकं सांख्ययोगोपदिष्टम्। 'तपः' कृच्छ्र-चान्द्रायणादि। 'आहारः' पवित्रतमानामुत्पन्नपयोयावकादीनाम्। 'मनः' सङ्कल्पद्वारेण शुद्धिकारणम्। 'उपाञ्जनं' गोमयलेपादि। 'कर्म' सन्ध्योपसनादि। 'अर्थशौचं' दत्ताशनादिवर्जनम्। ये विद्वांसः ते 'क्षान्त्या' ज्ञानेनैव[1] शुध्यन्ति। ते हि द्वेषेर्ष्यामत्सरैरशुद्धिकारणैर्नोपहन्यन्ते। 'तपसा' वेदाभ्यासेन, तज्ज्ञानेन च। यथोक्तं 'ब्राह्मणस्य तपो ज्ञानं' इति। कृच्छ्रादि तु सर्वेषामेव शुद्धिहेतुः, न वेदविदामेव। 'नदी वेगेन शुध्यती'त्यनेन शरावाद्यसंसर्गेऽपि तद्रसगन्धविरहेण प्रदेशान्तरे वेगवशान्नदी शुद्धा भवति। न तु कूपादिवत् सर्वत्राशुद्धिः। 'मनोदुष्टा' परपुरुषाभिलाषमात्रवती। 'रजसा' आर्तवेन। 'संन्यासेन' चतुर्थाश्रमपरिग्रहणेन। 'भूतात्मा' जीवः। 'बुद्धिः' अविद्यमानार्थाभिनिवेशेन वस्त्वात्मार्थाकारयोरसङ्केदाध्यवसायेन दुष्यति। सा तु 'ज्ञानेन' स्वप्रकाशाश्रयया प्रमाणव्युत्पत्त्या शुध्यतीति मेधातिथिः ॥[2]

याज्ञवल्क्यः [३, ३१-३४]

कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम्।
पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः॥

(१) 'क्षान्त्या शुध्यन्ति' इति मेधातिथिः।

(२) 'विद्यया' सांख्यवेदान्ताभ्यासजन्यया॥ 'अग्निः' मृन्मयादिषु 'पुनः पाकेनेति' (श्लो. १२२)। 'वायुः' चण्डालादिस्पृष्टे तृणकाष्ठादौ रथ्यापतिते॥ (मेधातिथिः)

[1]अकार्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयं च संन्यासो वै द्विजन्मनाम् ॥

तपो वेदविदां क्षान्तिर्विदुषां [2]वर्ष्मणो जलम् ।
तपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥

भूतात्मनस्तपोविद्ये बुद्धेर्ज्ञानं विशोधनम् ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता[3] ॥

यमः[4]

सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं शौचमद्भिश्च पञ्चमम् ॥

तथा

पात्राण्यद्भिर्विशुध्यन्ति मनः सत्येन वा धिया ।
भूतात्मा तपसा बुद्धिर्ज्ञानेन [5]क्षमया बुधः ॥

बृहस्पतिः [आशौ., ८२, ८१]

गात्रं मृदम्भसा शुध्येद्भूतं [6]भूताभिशंसनात् ।
विद्यया तपसा देही मतिर्ज्ञानेन शुध्यति ॥

स्वाध्यायेनानुतापेन होमेन तपसैनसः ।
ध्यानेन क्षेत्रवासेन दानेनांहःपरिक्षयः ॥

(१) These two s'lokas are omitted by उ.

(२) 'वर्ष्मणः' देहस्य (मिताक्षरा) (३) परमात्मनः—अ.

(४) Gap in आ by the loss of a leaf.

(५) अभया—उ. (६) भूतातिशंसनम्—उ ; भूताभिशंसनम्—आ.

तथा [आशौ., ५४, ५५, ५३]

परापवादाश्रवणं परस्त्रीणामदर्शनम् ।
एतच्छौचं श्रोत्रदृशोः जिह्वाशुद्धिरपैशुनम् ॥

अप्राणिवधमस्तेयं शुद्धिरुक्तं पादहस्तयोः ।
असंश्लेषः परस्त्रीणां शारीरं शौचमिष्यते ॥

सबाह्याभ्यन्तरं शौचमेतदुक्तमशेषतः ।
सर्वस्याप्यधिकं प्रोक्तमर्थशौचं स्वयंभुवा ॥

वसिष्ठः

कालोऽग्निर्मनसस्तुष्टिरुदकान्यवलेपनम् ।[1]
[2]अविज्ञातं च भूतानां षड्विधा शुद्धिरिष्यते ॥
'अविज्ञातं' यस्य दुष्टस्योपघातो न ज्ञातः ।

[3]बौधायनः [१, ८, २–४]

अद्भिर्शुध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुध्यति ।
अहिंसया च भूतात्मा मनस्सत्येन शुध्यति ॥
मनश्शुद्धिरन्तश्शौचम् । [बहिः] शौचं व्याख्यास्यामः ।

तथा,[4] [३, १, २३]

श्रूयते द्विविधं शौचं यच्छिष्टैः पर्युपासितम् ।
अहिंसया च भूतात्मा मनस्सत्येन शुध्यति ॥

(१) 'उदकाद्यवलेखनम्' इति उदयपुरमातृकादृतापपाठः ।

(२) अविज्ञानमिति मुद्रितवासिष्ठे. (३) 'पुनर्बौधायनः' इति अ.

(४) Lacuna in आ ends here.

पुनर्बौधायनः[१] [१, ८, ४७-४८]

कालोऽग्निर्मनसश्शुद्धिरुदकाद्युपलेपनम् ।
अविज्ञातं च भूतानां षड्विधं शौचमुच्यते ॥
देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।
उपपत्तिमवस्थां च विज्ञायाशौचमिष्यते ॥

शौचमित्यनुवृत्तौ—

हारीतः [अ. १९]

पञ्चविधमाभ्यन्तरं भवति। मानसं चाक्षुषं घ्राण्यं वाच्यं [३]श्रौत्रं चेति ॥

एषां मानसादीनां स्वरूपं शोधनेन सहोक्तं हारीतेन[२]—

अपुण्याभिधानं मनसोऽशुद्धिहेतुः। अभिपुण्याभिधानं पावयति। अपुण्यं पराभिद्रोहादि । पुण्यं विष्ण्वादीनां चिन्तनम् । चाक्षुषं त्वमेध्यादिदर्शने। आदित्यदर्शनाच्छुद्धिः। नग्नां परस्त्रीं कामतो बुद्धिपूर्वं दृष्ट्वाप्यादित्येन नास्ति शुद्धिः। तादर्थ्येनाप्यनुष्ठीयमानस्य शोधकत्वमितराभिधानवैपर्ययात्। घ्राण्यं पलाण्ड्वादिगन्धाघ्राणात्। उपघ्राते प्राणायामैस्त्रिभिः शुचिः। वाच्यमसत्यवचने। पुनरुपस्पर्शनम् ॥

(१) Most of the leaf of अा is worm-eaten and lost here.

(२) उ and अा have lacuna in the citations from हारीत, and are very confused. The manuscript of हारीतस्मृति in the possession of Dr. T. R. Chintamani, which has been consulted, is also corrupt, unintelligible and unhelpful. The restoration made is largely conjectural.

(३) श्रौत्रपापस्वरूपं तच्छोधनं चात्र मातृकायां भ्रष्टमिव भाति.

शङ्खलिखितौ

आत्मयाजिनां शरीरस्याद्भिर्मृद्भिश्च । ज्ञानेन बुद्धेस्तपसा पापात्मनाम् ॥

'आत्मयाजिनां' 'ज्ञानेन' बुद्धिः शुचिः इत्यर्थः

तथा

सन्तानजातानां मातृपैतृकाणां दोषाणां यमनियममन्त्रव्रतोपवासादिना शुद्धिः ॥

उशना

अत ऊर्ध्वं शौचाध्यायं व्याख्यास्यामः । तत्र द्विविधं शौचं बाह्यमाभ्यन्तरश्च । शौचं नाम बुद्ध्यहंकारनिन्दितेभ्यो निवर्तनम् । बाह्यमपि गन्धलेपस्नेहोपघाते । अद्भिर्गन्धरूपस्पर्शस्नेहानां प्रोक्षणाच्छुद्धिरिति ॥

'बुद्ध्यहंकारानिन्दितेभ्यः', 'बुद्धि' रत्र विचिकित्सात्मिका । 'अहंकारः' अहमेवोत्कृष्टः इत्यभिमानः । 'निन्दितं' सुरापानादि । 'अद्भिः प्रोक्षणात्' गन्धादिराहित्यं बाह्यं शौचमित्यर्थः ॥

पुनरुशना

तत्र हृदयशौचमनसूयता मनसः साधुता । कर्मशौचं गर्हितकर्मान्यता । शारीरशौचं मृद्भिरद्भिश्च । वाचामप्रियानृतनैष्ठुर्यवर्जनम् । मनसापि मिथ्यासङ्कल्पप्रतिषेधः ॥[1]

(१) The citations from Uśanas and the commentary are missing in आ and corrupt in अ and उ.

पैठीनसिः

उच्छिष्टं रेतोमूत्रं संस्पृश्य उपस्पृश्याचम्य प्रयतो भवति। त्रिः प्रक्षाल्य च तं देशम् ॥

विष्णुः [२३, ४२]

प्राणिनामथ सर्वेषां मृद्भिरद्भिश्च कारयेत्।
अत्यन्तोपहतानां च नान्यच्छौचमनाद्भिभिः ॥

मनुः [५, १३४–१३४]

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत्।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि ॥

वसा शुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

'दूषिका' नेत्रमलम्।

[१]देवलः

अन्नादीनां प्रवेशाच्च स्यादशुद्धिर्विशेषतः।
पतिताशुच्यमेध्यानां स्पर्शनाच्चाशुचिर्भवेत् ॥

स्वभावाद्वस्त्रविपर्यासात् [२]क्षतादध्वपरिश्रमात्।
उक्त्वा च वचनं शुक्तमनृतं क्रूरमेव वा ॥

(१) Manuscripts corrupt and contain lacuna; reconstructed.

(२) क्षुतादश्व परिश्रमात् (?)—अ; क्षुतदग्धपरिक्रमात्—उ.

त्रप्साविद्धां तनुं लक्ष्य दृष्ट्वाचम्य शुचिर्भवेत्।
प्रलेपस्नेहगन्धानामशुद्धौ व्यपकर्षणम् ॥
शौचलक्षणमित्याहुर्मृदम्भोगोमयादिभिः।
लेपे स्नेहे च गन्धे च व्यपकृष्टे सुदूरतः ॥
पश्चादाचमनं वापि शौचार्थं वक्ष्यते विधिः।

'त्रप्साविद्धां' इति श्लेष्मादिविद्धत्वमुक्तम्। 'वक्ष्यते विधिः' आचमनस्येति शेषः।

[१]हारीतः

अथ शारीरम्। दुष्टाभिशस्तपतिततिर्यगधोवर्णोपहतानां संस्पर्शे स्वेदपूयशोणितच्छर्दितनिष्ठीवितरेणुकर्दमोच्छिष्टजलविण्मूत्रपुरीषादिभिर्बाह्यशरीरोपघाते निरुपहताभिर्मृद्भिरद्भिर्भस्मगोमयौषधिमन्त्रमङ्गलाचारविधिप्रयुक्तैर्बाह्यशरीरोपघातात् पूतो भवति ॥

'दुष्टाः' चण्डालादयः। [१]'अधोवर्णः' शूद्रः। 'उपहतः' कुष्ठादियुक्तः। 'मन्त्राः' अघमर्षणादयः। 'मङ्गलाचारश्च' मङ्गलेष्टाचरणं येषां सितसर्षपादीनाम्। तत्र भस्मादिविकल्पितसमुच्चयप्रयुक्तौ शिष्टप्रयुक्तेन विधिना शुचि संभवतीति ॥

विष्णुः [२२, ७७-८०]

नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैश्चोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य शुध्येत्। अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य

(१) Gap in मा begins here.

स्नानेन । वक्त्रोपहतस्तूपोष्य स्नात्वा पञ्चगव्येन । दशनच्छदोपहतश्च ॥

'दशनच्छदः' दण्ष्ट्रः ।

अङ्गिराः

ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति ॥[१]
इन्द्रिये च प्रविष्टं स्यादमेध्यं यदि कर्हिचित् ।
मुखे स्पृश्य गतं तत्र किंतु स्नानं विशोधनम् ॥

शङ्खः

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा पुनः ।
नाभेरूर्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुध्यति ॥

[यमः]

कर्दमेन तु वर्षासु प्रविश्य ग्रामसंकरम् ।
जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्यां च द्विगुणाः स्मृताः ॥

'ग्रामसंकरः' ग्रामस्यावकरः ।[२]

---

(१) शुद्धिविवेके—" अङ्गिराः—ऊर्ध्वं नाभेः अपवित्रद्रव्येण विष्ठादिना करौ मुक्त्वा यदङ्गमुपहन्येत तत्र स्नानम्। अधस्तात्तु क्षालनेनैव शुध्यति ॥"

(२) Supplied by आ.

# अथ स्नानशुद्धिः

तत्र मनुः [५, ८५–८७]

दिवाकीर्तिमुदक्यां च पतितं सूतिकां तथा ।
शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान्मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥
नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ।
आचम्यैव तु निस्स्नेहं गां[1] स्पृष्ट्वा वीक्ष्य वा रविम् ॥

[2]'दिवाकीर्तिः' चाण्डालः[3]। 'तत्स्पृष्टिनो' अत्र दिवाकीर्त्यादयो बोद्धव्याः। एतच्च स्नानं जलावगाहनासंभव उष्णजलेनापि कर्तव्यम्। [4]"वह्नितप्तेन शरीरशुद्धिर्विज्ञेय" इति शङ्खाभि-

(१) 'गामालभ्यार्कमीक्ष्य वा' इति मेधातिथिपाठः ।

(२) दिवाकीर्तिः न नापितः, तस्य स्पृश्यत्वात् भोज्यान्नत्वाच्च। यत्तु श्मश्रुकर्मणि तस्येदं स्नानमित्याहुः तदपि सिद्धत्वादवाच्यम् । अवश्यं श्मश्रुकर्माणि कारयतो रोमाणि गात्राणि स्पृशन्ति, तानि शरीरात् च्युतान्यशुद्धानीति सिद्धं स्नानम् ॥ (मेधातिथिः)

(३) सूतिकाऽत्र आसमाप्ताशुद्धिकालात्—इति आ.

(४) अत्र 'आ' मातृकायामधिको दृश्यते—षाडशन्तानकथनप्रकरणे—
चाण्डालशवयूपादि स्पृष्ट्वाऽस्नातां रजस्वलाम् ।
स्नानार्हस्तु यतः स्नाति स्नानं नैमित्तिकं [हि तत्]
यत्स्नानमात्रकं वै च क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥
स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया शङ्खस्य च मतं यथा ॥

धानात्। 'अशुचिदर्शने' दिवाकीर्त्यादीनामशुचीनां दर्शने ॥

ब्रह्मपुराणे

मानुषास्थि ह्युपस्पृश्य दग्धं निःस्नेहमेव वा ।
स्नायाद्गां च स्पृशेत् सूर्यं पश्येद्विष्णुमनुस्मरेत् ॥

इदं च निःस्नेहास्थिस्पर्शनस्नानं बुद्धिपूर्वस्पर्शनविषयम् । गवादिस्पर्शनं त्वबुद्धिपूर्वस्पर्शनविषयम् ।

मनुः [५, १४४]

वान्तो विरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् ।
आचामेदेव भुक्त्वान्नं स्नानं मैथुनिनः स्मृतम् ॥

[शातातपः][१]

ऋतौ तु गर्भाशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ।
[अनृतौ तु सदा कार्यं शौचं मूत्रपुरीषवत् ॥]

यमः

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥
'अभ्युदित' इति पर्युषितकालोपलक्षणार्थः ।

(१) शातातप इति शुद्धिविवेके (२६)

गौतमः [१४, २९–३१]

पतितचण्डालसूतिकोदक्याशवस्पृष्टितत्स्पृष्ट्युपस्पर्शने सचेलोदकोपस्पर्शनाच्छुध्येत्। शुनश्च। यदुपहन्यादित्येके॥

[१]'उपस्पर्शन'शब्दः प्रत्येकमभिसंबध्यते। तेन पतितचण्डालसूतिकोदक्याशवोपस्पर्शने पतितादिस्पृष्ट्युपस्पर्शने तत्स्पृष्ट्युपस्पर्शने' च सवस्त्रस्नानाच्छुध्यतीत्यर्थः। अत्र स्पृष्टितत्स्पर्शनतृतीयस्य सचेलस्नानमुक्तं तद्बुद्धिपूर्वकस्नानविषयम्। अबुद्धिपूर्वकस्नानविषये तु—

"उपस्पृश्याशुचिस्पृष्टं तृतीयं वाऽपि मानवः।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति॥

इति देवलोक्तं बोद्धव्यम्॥

बृहस्पतिः [आशौ., ४९]

पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा च कामतः।
स्नानं सचेलं कृत्वाग्निं घृतं प्राश्य विशुध्यति॥

देवलः

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकम्।
सूतिकां साविकां नारीं रजसा च परिप्लुताम्॥
श्वकुक्कुटवराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचैलं सशिरः स्नात्वा तदानीमेव शुध्यति॥

(१) Additional comments in आ, upto 'तद्बुद्धिपूर्वक' below, identical with मस्करिन्.

अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ।
विशुध्यत्युपवासेन पुनः कृच्छ्रेण वा पुनः ॥
उपस्पृष्ट्वाऽशुचिस्पृष्टे तृतीयं वापि मानवः ।
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति ॥
'कृच्छ्रेण वा पुनः' इत्यभ्यासविषयम् ।[१]

तथा

मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी ।
मज्जानं शोणितं वापि परस्य यदि संस्पृशेत् ॥
स्नात्वा प्रमृज्य लेपादीनाचम्य स शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात् ॥

बौधायनः

चाण्डालेन सहाध्वगमने सचेलस्नानम् ॥

याज्ञवल्क्यः [३, ३०]

उदक्याशुचिभिः स्नायात् संस्पृष्टस्तैरुपस्पृशेत् ।
अब्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥

'तैः संस्पृष्टः' तैः चाण्डालोदक्यादिभिः स्पृष्टैः दण्डादिना 'संस्पृष्टः' उपस्पृष्टः । 'उपस्पृशेत्' आचामेत् । 'अब्लिङ्गानि'[२] 'आपो हि ष्ठे'त्यादीनि [३]त्रीणि। एवं च 'शवं तत्स्पृष्टिनं चैव' [५, ८५] इति मानववचनं साक्षात्स्पर्शनविषयम् ॥

(१) स्पर्शविषयम् (शुद्धिविवेक)
(२) ऋ- सं.. १०, सू, १.
(३) Additions in आ.

पराशरः [१२, २५]

चैत्यवृक्षश्चितिर्यूपश्चाण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ॥

तथा [५, ६]

श्वकाकैरवलीढस्य नखैर्विदलितस्य च ।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूडनम् ॥

'उपचूडनं' अग्निशिखाया उपस्पर्शनम् ।

आपस्तम्बबौधायनौ [आप., १,१५,१६-१८; बौ., १,११, ३७-३८]

शुनोपहतः सचेलोऽवगाहेत । प्रक्षाल्य वा तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाऽऽचम्य प्रयतो भवति ॥

'शुनोपहतः' शुना स्पृष्टः । 'सचेलः' सोत्तरीयाच्छादनः । सचेलावगाहनं नाभेरूर्ध्वस्पर्शविषयम् ॥

हारीतः

श्वपचमुष्टिकप्रेतहारकशवानि संस्पृश्य 'देवीराप' इत्येताभिरन्तर्जले स्नातः पूतो भवति । [१]अजीर्णवान्तश्मश्रुकर्मयोनिपशुदिवामैथुनगमने च ॥

'मुष्टिको' म्लेच्छ इति ।[२]

(१) Added by आ to the citation of Āpastamba above should come here; it is not found in Āpastamba and Baudhāyana.

(२) मुष्टिकः म्लेच्छ इति (शु. वि.); मुष्टिकः शवहर इति रत्नाकरः (शु. प्र.)

विष्णुः [२२, ६६]

चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः। मैथुने दुःस्वप्ने रुधिरोपगतकण्ठे वमनविरेकयोश्च। श्मश्रुकर्मणि कृते च। शवस्पृशं च स्पृष्ट्वा रजस्वलाचाण्डालयूपांश्च। भक्ष्यवर्जं पञ्चनखशवं तदस्थि सस्नेहं च। सर्वेष्वेतेषु वस्त्रं नाप्रक्षालितं बिभृयात् ॥

पैठीनसिः

स्कन्दने छर्दने सचेलस्नानं घृतप्राशनं च। काककेशमलने सचेलस्नानम्। अनुदकमूत्रपुरीषकरणे सचेलस्नानं महाव्याहृतिहोमश्च। खरोष्ट्रश्वचण्डालस्पर्शने सचेलस्नानम् ॥

'स्कन्दने' रेतस इति शेषः। 'काककेशमलने' काककेशमर्दने। 'अनुदकमूत्रपुरीषकरणे' शौचविलम्ब इत्यर्थः। 'सस्नेहम्' इत्यत्र व्याहृतिहोमो बुद्धिपूर्वकः। अत्रैव मानवं सचेलस्नानमबुद्धिपूर्वकविषयम् ॥

काश्यपः

चाण्डालश्वपचश्मशानसूनामृतहारकरजस्वलासूतिकास्पर्शे उदितेऽस्तमिते स्कन्दित्वाक्रन्दने कर्णक्रोशने चित्यारोहणे यूपस्पर्शने चैव[१] प्रायश्चित्तम्। ब्राह्मणेभ्यो निवेद्य सचेलः स्नात्वा 'पुनर्मनो' जपेत्। महाव्याहृतिभिः सप्ताहुतीर्जुहुयात्। ततः शुद्धिर्भवति ॥

बुद्धिपूर्वमेतत्। 'पुनर्मनः'—"पुनर्मनः पुनरायुः" इत्यादि [माध्यन्दिनसंहिता, १, २, ३]

(१) From here folio 73 to 76 of आ are missing.

वायुपुराणे

उदक्यां सूतिकां चैव श्वानमन्त्यावसायिनीम् ।
नग्नादीन् मृतहारांश्च स्पृष्ट्वा शौचं विधीयते ॥

स्नात्वा सचेलो मृद्भिश्च शुध्येद्द्वादशभिर्नरः ।
एतदेव भवेच्छौचं मैथुने वमने तथा ॥

च्यवनः

श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं यूपं चितिकाष्ठं मद्यं मद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलोऽपोऽवगाह्योत्तीर्याग्निमुपस्पृशेत् । गायत्र्यष्टशतं जपेत् । घृतं प्राश्य पुनः स्नात्वा त्रिराचामेत् ॥

एतदपि बुद्धिपूर्वाभ्यासविषयम् ॥

शातातपः

रजकश्चर्मकृच्चैव व्याधजालोपजीविनौ ।
चेलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्रामकुक्कुटसूकरौ ॥
एभिर्यदङ्गं स्पृष्टं स्यात् शिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा चाचान्ते शुचितामियात् ॥

मार्कण्डेयपुराणे [३५, ३६–८]

अभोज्यसूतिकाषण्डमार्जाराखुश्वकुक्कुटान् ।
पतितापविद्धचाण्डालमृतहारांश्च धर्मवित् ॥

संस्पृश्य शुध्यति स्नानादुदक्याग्रामसूकरौ ।

कालिकापुराणे

स्पृष्ट्वा रुद्रस्य निर्माल्यं[१] सवासा आप्लुतः शुचिः ॥

व्यासः

भासवानरमार्जारखरोष्ट्राणां तथा शुनाम् ।
सूकराणाममेध्यं च स्पृष्ट्वा स्नायात् सचेलवत् ॥

आपस्तम्बः [[२]स्मृति, ९, १०]

यद्विष्ठितं काकबलाकयोर्वा
अमेध्यलिप्तं च भवेच्छरीरम् ।
श्रोत्रे मुखे च प्रविशेच्च सम्यक्
स्नानेन लेपोपहतस्य शुद्धिः ॥

'विष्ठितं' विष्ठाकृतम् ।

शातातपः

अशुचिं स्पर्शयेद्यस्तु एकमेव हि दुष्यति ।
तं स्पृष्ट्वान्यः स चान्येन सर्वद्रव्येष्वयं विधिः ॥

पराशरः [७, ११–१२]

अस्तंगते यदा सूर्ये चाण्डालं पतितं स्त्रियम् ।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥[३]

(१) 'निर्माल्यमत्र अपनीतमेव इत्याचारादर्शः' (शु. वि.)
(२) 'स्मृतीनां समुच्चयः' पृ. ४२.
(३) The Second s'loka occurs only in अ.

जातवेदः सुवर्णं च सोममार्गं तथैव च।
ब्राह्मणानुमते चैव स्नात्वा दृष्ट्वा च शुध्यति ॥
आचान्तमनुगतं वा निशि स्नानं न विद्यते।
स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन तु ॥

'आचान्तं' आचमनम्। 'अनुगतं' जलाशयम्। अत्र 'स्नानमाचमनं प्रोक्तं' इत्येतद्द्वयमपि [१]कर्तव्यत्वेनाभिहित-मित्यर्थः ॥

वृद्धशातातपः [स्मृतीनां समुच्चये, पृ. २३३]

आदित्येऽस्तमिते रात्रावस्पृश्यं च स्पृशेद्यदि।
भगवन् केन शुद्धिः स्यात् तन्मे ब्रूहि सुनिश्चितम्।
अनस्तमित आदित्ये संगृहीतं च यज्जलम्।
तेन सर्वात्मना शुद्धिः[२] शवस्पृष्टं न शुध्यति ॥

देवलः

दिवाहृतैर्जलैः स्नानं निशि कुर्यान्निमित्ततः।
प्रक्षिप्य च सुवर्णं तु संनिदीप्य च पावकम् ॥

आपस्तम्बः

अस्पृश्यस्पर्शने वान्ते श्मश्रुपाते भगे क्षुरे।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ॥

(१) The words that follow occur only in अ.
(२) शवस्पृष्टं तु वर्जयेत्—अ.

'स्नानं' तर्पणरहितमित्यर्थः । [१]'दैवपित्र्यविवर्जितम्' स्नानाङ्ग देवपितृतर्पणरहितमित्यर्थः ॥

यमः

आतुरं स्नानसंप्राप्तौ दशकृत्वस्त्वनातुरः ।
स्नात्वा स्नात्वा स्पृशेत् क्षिप्रं ततः शुद्धः स आतुरः ॥

(१) This sentence occurs ony in अ.

# अथ द्रव्यशुद्धिः

तत्र मनुः [५, १११-१२२]

तैजसानां मणीनां च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥

निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयं चैव राजतं चानुपस्कृतम् ॥

अपामग्नेश्च संयोगाद्धेम रूप्यं च निर्बभौ ।
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः ॥

ताम्रायःकांस्यरैत्यानां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥

द्रवाणां चैव सर्वेषां शुद्धिरुत्पवनं स्मृतम् ।
प्रोक्षणं संहतानां च दारवाणां च तक्षणम् ॥

मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
चमसानां ग्रहाणां च शुद्धिः प्रक्षालनेन तु ॥

चरूणां स्रुक्स्रुवाणां च शुद्धिरुष्णेन वारिणा ।
स्फ्यशूर्पशकटानां च मुसलोलूखलस्य च ॥

अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम् ।
प्रक्षालनेन [१]त्वल्पानामद्भिः शौचं विधीयते ॥

(१) त्वन्यानां—उ.; अल्पानां इति मेधा. पाठः ।

चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च।
शाकमूलफलानां च धान्यवच्छुद्धिरिष्यते॥

कौशेयाविकयोरूषैः[1] कुतपानामरिष्टकैः।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः॥

क्षौमवच्छङ्खशृङ्गाणामस्थिदन्तमयस्य च।
शुद्धिर्विजानता कार्या गोमूत्रेणोदकेन वा॥

प्रोक्षणात्तृणकाष्ठं च पलालं चैव शुध्यति।
मार्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृन्मयम्॥

'तैजसानां' सुवर्णादीनाम्। 'मणीनां' स्फटिकादीनाम्। 'अश्ममयं' पाषाणमयम्। 'भस्मनाऽद्भिर्मृदा' इति मृद्भस्मनोर्लेपगन्धापनयनैककार्यत्वाद्विकल्पः। आपस्तु समुच्चीयन्ते। 'अब्जं' शङ्खशुक्त्यादि। 'अनुपस्कृतं' रेखाद्युपस्काररहितम्, रेखादिसंभवे मलसंभवात्। 'निर्णेकः' शुद्धिः। अमेध्याद्युपहतविषयमेतत्। ताम्रायःकांस्यादीनां भस्माम्लोदकवारिभिः यथार्हं शौचं निर्लेपविषयम्। 'वैदलानां' वंशादिदलनिर्मितानाम्। 'ऊषैः' ऊषरमृत्तिकया। 'कुतपः' कम्बलविशेषः॥

ब्रह्मपुराणे

सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च।
कांस्यायस्ताम्ररैत्यानि[2] त्रपुसीसमयानि च॥

(१) रूपैः—अ.

(२) रौप्याणि—अ.

निर्लेपान्येव शुध्यन्ति केवलेन जलेन च।
शूद्रोच्छिष्टानि शोध्यानि त्रिधा क्षाराम्लवारिभिः ॥

सूतिकाशवविण्मूत्ररजस्वलहतानि च।
प्रक्षेप्तव्यानि तान्यग्नौ [१]यच्च यावत्सहेदपि ॥

'रैत्यानि' रीतिः पित्तलमिति लोके प्रसिद्धं, तन्मयानि।[२]

[३]यमः

फलपात्रस्य सर्वत्र वालरज्वाभिघर्षणम्।
अभ्युक्षणं च काष्ठानां वैणवं गोमयेन च ॥

मृन्मयानां च सर्वेषां पुनर्दाहेन शोधनम्।
द्रव्याणां संहतानां च मृद्भिरद्भिस्तथा मृदा ॥

[४]यज्ञपात्राणां तु सर्वेषामद्भिः शुद्धिर्विधीयते।
धान्यानां प्रोक्षणाच्छुद्धिरद्भिः प्रक्षालनेन च ॥

चैलवच्चर्मणां शुद्धिर्वैदलानां तथैव च।
शाकमूलफलानां च पुष्पाणामासनस्य च ॥

ऊर्णाकार्पासिकानां च शुद्धिरद्भिर्मृदा सह।
दुकूलपट्टकौशेयाः शुध्यन्त्यद्भिः सदैव तु ॥

'वालरज्वा' गोवालरज्वा।

(१) यत्र—आ.

(२) 'रैत्यानि' पित्तलघटितानि इति शुद्धिविवेकः (२८)

(३) Leaf 77 of आ begins here.

(४) आ reads for this line—सोमपानां तु यत्पात्रं अद्भिस्तच्छुद्धिमाप्नुयात्।

तथा

कुतपानामरिष्टैस्तु श्रीफलैरंशुपट्टयोः ।
कृष्णाजिनानां वालैश्च बालानां मृद्भिरम्भसा ॥
गोमूत्रेणास्थिदन्तानां क्षौमाणां गौरसर्षपैः ।
पांसुकः परिवर्तेन मृत्तिकाभिश्च [1]शोधनम् ॥

'पांसुकः' पांसुमयो वेद्यादिः ।

याज्ञवल्क्यः [१, ७६]

सोषैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ।
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ॥

शङ्खः

सिद्धार्थकानां कल्केन शृङ्गदन्तमयस्य च ।
गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा ॥
निर्यासानां गुडानां च लवणानां तथैव ।
कुसुम्भकुङ्कुमानां च ऊर्णाकार्पासयोस्तथा ॥
प्रोक्षणात्कथिता शुद्धिरित्याह भगवान् यमः ।

देवलः

हेमस्फटिकरौप्याणां यज्ञेषु च मखेषु च ।
यतीनां चैव पात्राणामद्भिः शौचं विधीयते ॥

तथा

तावन्तं मलिनं पूर्वमद्भिः क्षारैश्च शुध्यति ।
अंशुभिः शोषयित्वा च वायुना वा समाहरेत् ॥

(१) कादनम्—उ.

ऊर्णापट्टांशुकक्षौमदुकूलाविकचर्मणाम् ।
अल्पशौचे भवेच्छुद्धिः प्रोक्षणादिभिरेव च ॥
तान्येवामेध्यलिप्तानि निर्णिज्याद्गौरसर्षपैः ।
धान्यकल्कैः पर्णकल्कै रसैश्च फलकल्ककैः ॥
तूलिकाद्युपधानानि पुष्परक्ताम्बराणि च ।
शोषयित्वाऽऽतपे किंचित्करैरुन्मार्जयेन्मुहुः ॥
पश्चाच्च वारिणा प्रोक्ष्य शुचीत्येवमुदाहरेत् ।
तान्यप्यतिविलिप्तानि यथावत्परिशोधयेत् ॥

लोहानां दहनाच्छुद्धिर्भस्मना गोमयेन वा ।
[१]दहनात्खननाद्वापि शैलानामम्भसापि वा ॥
काष्ठानां तक्षणाच्छुद्धिर्मृदम्भोभिर्विशोधनम् ।
मृन्मयानां च पात्राणां दहनाच्छुद्धिरिष्यते ॥
सर्वद्रवाणां पक्वानां लवणस्य गुडस्य च ।
[२]अशुद्धानां च सर्वेषां परित्यागो विधीयते ॥
तोयाभावे परस्पर्शे भूमिसंस्पर्शनेऽपि च ।
कुण्डिकायाः परित्यागो दहनं चापदि स्मृतम् ॥

द्रव्याणामवशिष्टानां जलाग्निभ्यां विशोधनम् ।
शोधनार्थं हि सर्वेषामुभयं ब्राह्मणैः स्मृतम् ॥
श्वपाको यत्स्पृशेद्द्रव्यं मृन्मयं द्रवमेव वा ।
पक्वं वा भोज्यकल्कं वा तत्सर्वं परिवर्जयेत् ॥

(१) Omission in उ and अ.

(२) आ reads for this line—तान्यच्छौचं परित्यागादशुद्धानामिति स्मृतिः ।

उच्छिष्टाशुचिभिस्स्पृष्टमद्रवं शोध्यतेऽम्भसा ।
द्रवं वाऽपि प्रभूतं च शोधयेत्प्रोक्षणादिभिः ॥

विष्णुः [२३, २४]

पद्माक्षैर्मृगलोमिकानाम् ॥

तथा [२३, ३१–३५]

गुडादीनामिक्षुविकाराणां प्रभूतानां गृहनिहितानां वार्यग्निदानेन । सर्वलवणानां च । पुनःपाकेन मृन्मयानाम् । द्रव्यवत्कृतशौचानां देवतार्चानां भूयःप्रतिष्ठापनेन[१] । असिद्धस्यान्नस्य यन्मात्रमुपहतं तन्मात्रं परित्यज्य शेषस्य कण्डनप्रक्षालने कुर्यात् ॥

हारीतः

अद्भिः काञ्चनराजतानाम् । तद्गुणवर्णयोगात् स्नेहवैवर्ण्योपहतानां यवगोधूमकलायमाषगोमयचूर्णैर्मार्जनम् । अद्भिः प्रक्षालनं च । अम्लक्षाराभ्यां ताम्राणाम् । भस्मना कांस्यानाम् । शाणघर्षणैः [२]कार्ष्णायसानाम् । सिकतावघातघर्षणैः शैलानाम् । शैलावघर्षणमार्जनैर्मणिमयानाम् । निर्लेखनैर्दारुमयाणाम् । पुनःपाकात्पार्थिवानाम् । गोमूत्रगोमयबिल्वैर्वैदलानाम् । गोवालरज्ज्वा सोदकया फलपात्राणाम् । मार्जनं कमण्डलूनां यतिपात्राणाम् । क्षारोषाभ्यां कार्पासशणमयानाम् । पुत्रजीवकारिष्टैः क्षौमदुकूलानाम् । पुत्रजीवकोदश्विद्भिःक्षीराणाम् । श्रीफलश्वेतसर्षपैः कौशेयानाम् । उदश्विद्वल्मीकमृदा सर्षपैरूर्णानाम् । स्नेहसक्तुकुल्माषोद्वर्तनैर्गुरूणाम् ॥

'कुल्माषाः'[१] अर्धस्विन्नमाषाः। 'गुरवः' ऊर्णामया एवोपहताश्च कम्बलाः।

<u>ब्रह्मपुराणे</u>

गोरसाक्तानि भाण्डानि विशोध्योष्णेन वारिणा ॥

'गोरसाक्तानि' स्पर्शादिदुष्टगोरसलिप्तानि।

<u>शङ्खलिखितौ</u>

अत ऊर्ध्वं शौचविधिः। कारुहस्तः शुचिः। तथाकरस्थद्रव्याणि प्रोक्षितानि शुचीनि। आकरजानामभ्यवहरणीयानां घृतेनाभिघारितानां शुद्धिः। प्लवनेन स्नेहानाम्। स्नेहवद्द्रव्याणां संहतानां मृद्भिरद्भिः। द्रवाणामुत्पवनम्। शुष्काणामुद्धृतदोषाणां संस्कारः। परिप्लावितानां दोषाणामत्यन्तत्यागः। चैलानां मृद्भस्मगोमूत्रक्षारोदकैः। चैलवद्धान्यानां पक्षचामरचर्मतृणवालवेत्रवल्कलजानां च ॥

'अभ्यवहरणीयाः आकरजाः' लवणादयः। 'स्नेहानां' घृतादीनाम्। 'संहतानां मृद्भिरद्भिः' संहतानां खट्वादिद्रव्याणां मृद्भिः प्रक्षालनेन शुद्धिः। 'द्रवाणां' गुडादीनाम्। 'उद्धृतदोषाणां संस्कारः' दोषोद्धरणमेव संस्कार इत्यर्थः। 'परिप्लावितानां दोषाणां' अत्यन्तसंपृक्तानाम् ॥

<u>बौधायनः</u> [१, ८, २८–४३]

तैजसानां पात्राणामसकृन्मृद्भस्माभिः परिमार्जनमन्यतमेन वा। ताम्ररजतसुवर्णानामम्लैः। [अमत्राणां दहनम्]। दारवाणां

(१) कुल्माषा चीडा इति प्रसिद्ध इति <u>रत्नाकरः</u>' (शु. वि., २९)

तक्षणम् । वैणवानां गोमयेन । फलमयानां गोवालरज्ज्वा । कृष्णाजिनानां बिल्वतण्डुलैः । [१]कुतपानामरिष्टैः । और्णानामादित्येन । क्षौमाणां गौरसर्षपकल्केन । मृदा चेलानाम् । चेलवच्चर्मणाम् । तैजसवदुपलमणीनाम् । दारुवदस्थ्नाम् । क्षौमवच्छङ्खशृङ्गशुक्तिदन्तानाम् । पयसा वा । चक्षुर्घ्राणानुकूल्याद्वा ॥

'अमत्राणां' पात्राणाम् ।

पैठीनसिः

चमसानां चोच्छिष्टगन्धहिरण्यरजतताम्राणामलेपानामद्भिः । सलेपानां गोमयेन गोमयमृत्सलिलेन वा । भिन्नमभिन्नमत्र न दोषः । कार्ष्णायसानां सिकतादिभिः । पुनर्दाहेन मृन्मयानाम् । अद्भिः शैलानाम् । त्रपुसीसकानां गोमयतुषैः । कांस्यं भस्मना । काष्ठमयं तक्षणेन । क्षीरोदकाभ्यां शङ्खशुक्तिकादीनाम् । वस्त्राणां निर्णेजनेन । चेलवदुपलमणीनाम् । कृष्णाजिनानां गौरसर्षपैः । रौरवबस्ताजिनानां बिल्वतण्डुलैः । [१]कुतपानामरिष्टैः ॥

उशना

काष्ठानां परिलेपनेन । मूलकफलपुष्पभूमितृणदारुपलालधान्यानामभ्युक्षणम् । रज्जुवैणवयज्ञचर्मकार्पासिकक्षौमदुकूलचीनांशुकपट्टकौशेयोर्णकानामद्भिरेव प्रक्षालनम् ॥

(१) 'कुतपः' नाम पार्वतीयच्छागनिर्मिताः कम्बला उच्यन्ते । 'अरिष्टैः' फेनवृक्षफलैः । (गोविन्दस्वामी)

सुमन्तुः

मणिकनकरजतशङ्खशुक्त्युपलप्रवालानां परिमार्जनं शुद्धिः । वस्त्रविदलरज्जुचर्मणामद्भिः प्रक्षालनम् । भूम्यस्थिकाष्ठानां तक्षणम् । मृत्पात्रलोहजानामग्निनोत्तापनम् । सीसत्रपुताम्रायसानामुदकभस्मभ्यां त्रिःपरिमार्जनाच्छुद्धिः । गोवालरज्ज्वा पुष्पफलपत्रमूलानां च । अन्यत्र शकुनोच्छिष्टेभ्यः । तेषामदोषः । श्वदष्टानां चमसादीनां स्रुक्स्रुवाणां चरूणामन्येषां यज्ञभाण्डानामुष्णेन वारिणा शौचम् । तैजसानान्तु भूर्जचर्मचीरवेणुवैदलवल्कलानामद्भिः प्रक्षालनम् ॥

काश्यपः

अथ पात्राणां शौचविधिं व्याख्यास्यामः । परिलेखनं दारुपात्राणाम् । औपलानां जलेनावघर्षणम् । मृन्मयानां पुनर्दहनम् । रैत्यानां ताम्राणामम्लवारिणा मार्जनम् । भस्मना कांस्यत्रपुसीसकताम्रायसानाम् । सिकताभिर्दन्तशृङ्गशङ्खशुक्तिमणीनाम् । वस्त्ररजतसुवर्णानामद्भिः शौचम् । तृणकाष्ठभूर्जशणक्षौमचीरचर्मवेणुवैदलपत्रवल्कलानां चेलवच्छौचम् । अत्यन्तोपहतानां परित्यागः ॥

वायुपुराणे

अरिष्टैश्च तथा बिल्वैरिङ्गुदैश्चर्मणामपि ।
वैदलानां च सर्वेषां चर्मवच्छौचमिष्यते ॥[१]

(१) Folio 82 of आ, which should begin here, is lost.

वल्कलानां च सर्वेषां भस्मना शौचमिष्यते ।
तथास्थिचर्मदारूणां शृङ्गाणां च विलेखनम् ॥

मणिवज्रप्रवालानां मुक्ताशङ्खफलस्य च ।
सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ॥

स्याच्छौचं सर्ववालानामाविकानां च सर्वशः ।
तथा कार्पासिकानां च भस्मना समुदाहृतम् ॥

हारीतः

पयसा दन्तानाम् । [1]क्रीतानामवहननिष्पवनैः । व्रीहियवगोधूमानां घर्षणदलनपेषणैः । शमीधान्यानां कण्डनविमर्शनक्षालनैः । फलीकृतानां घर्षणप्रक्षालनपर्यग्निकरणैः । शाकमूलफलानां प्रशस्तभूस्थानां ग्रहणे प्रक्षालनैः । इक्षुकाण्डानां शमीधान्यवत् । यज्ञद्रव्यहविषां श्रपणमेव । उत्पवनं स्नेहानाम् । पुनःपाकः कृतलवणानाम् । पुष्करादिभिः स्पृष्टानां भूस्थानां तृणकाष्ठानामादित्यदर्शनाच्छौचम् ॥

'दन्तानां' दन्तनिर्मितानाम् । 'शमीधान्यानि' मुद्गादीनि ॥

आपस्तम्बः [१, १७, ९-१३]

अनाम्राते[2] मृन्मये भोक्तव्यम् । आम्रातं चेदभिदग्धे । परिमृष्टं लोहं प्रयतम् । निर्लिखितं दारुमयम् । यथागमं यज्ञे ॥

(१) 'क्रीतानां' क्रयोपात्तानाम् तण्डुलादीनाम् । 'अवहननं' कण्डनम् । 'निष्पवन' प्रस्फोटनम् । 'फलीकृतानां' निस्तुषीकृतानां तण्डुलादीनाम् । 'पर्यग्निकरणं' तदुपर्यग्निकरणम् ॥ (शुद्धिप्रकाशः, पृ. १२४)

(२) 'अनाघ्रीते' 'आघ्रीतं' इति उज्वलादृतपाठौ । 'आघ्रीतं' क्वचित्कार्ये पाकादावुपयुक्तमिति व्याख्यातश्च ॥ 'आपणः' पण्यवीथी । तत्र कृतान्नं नाश्नीयात् ॥ (उज्वला)

'आम्रातं' अन्यस्मै लौकिकप्रयोजनाय प्रक्षालितमिति कपर्दिभाष्यम् ॥

**शातातपः**

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्वपाकोपहतेषु च ॥

**शङ्खलिखितौ**

चमसानामद्भिर्यज्ञसामवायिकशौचम् । अध्वरेषु चमसवद्यतिपात्राणाम् । यतिसमयमाम्नायतः सोदकानां परिघर्षणमिति ॥

**ब्रह्मपुराणे**

द्रव्याद्द्रव्याणि भूरीणि परिप्लाव्यानि चाम्भसा ।
सस्यानि व्रीहयश्चैव शाकमूलफलानि च ॥

**बौधायनः** [१, ८, ४५–४६]

प्रवचनाद्यज्ञे[1] चमसपात्राणाम् । न सोमेनोच्छिष्टा भवन्तीति श्रुतिः । शाकमूलफलानां तु प्रक्षालनम् ॥

शुद्धिः [illegible]—

**शङ्खलिखितौ**

पर्णानां प्रक्षालनमेव । [illegible]ः[2] । तथा पुष्पमूलफलानां च विष्किरावधूतानां प्रोक्षणम् । अभ्युक्षणमित्येके । यानशय्यासनानां संहतवच्छौचम् ॥

---

(१) चमसानां पात्राणामुच्छिष्टदोषो नास्तीति शेषः । मूत्राद्युपहतानां त्याग एव । किं तद्वचनमित्याह 'न सोमेन' इति । (गोविन्दस्वामी)

(२) Leaf 83 of आ begins here.

'विष्किराः' कुक्कुटादयः ।[१]

<u>बौधायनः</u> [९, ९, ७–६]

आसनं शयनं यानं नावः[२] पन्थास्तृणानि[३] च ।
आत्मशय्यासनं वस्त्रं जायाऽपत्यं कमण्डलुः ।
शुचीन्यात्मन एतानि [४]परेषामशुचीनि तु[५] ॥

'दुष्टाभिशस्तपतिततिर्यग्गन्धर्वगोंषहतानाम्' इत्यनुवृत्तौ—

<u>हारीतः</u>[६]

यानशय्यासनानि परिहार्याणीत्येके मन्यन्ते । तत्र वर्णविशेषात् शुक्लमलिनसंसर्गदर्शनात् पादोपसंसर्गाद्व्याधिसंक्रमयोगाच्च । तस्मात्पृथक् शौचाः श्रेयांस इति । स्वानुपपत्तौ शुच्यन्तर्वास इति समामनन्ति । स्पर्शे सचैलस्नानमेव । एवं ह्याह—

आसनं शयनं यानमन्तर्धाय समाचरेत् ॥

<u>बौधायनः</u> [१, १३, २८–३२; १, १४, १–१–१३]

असंस्कृतायां भूमौ [७]न्यस्तानां तृणानां प्रक्षालनम् । परोक्षोप[८]हतानामभ्युक्षणम् । [९]एवं क्षुद्रसमिधाम् । महतां काष्ठानामुप-

(१) शुद्धिप्रकाशः; १२२
(२) 'नादः' इति शु. प्र, पाठः, १२३. (३) "पथि तृणानि च" इति मु–बौधा ।
(४) 'सर्वेषां' इति शु. प्र. पाठः; परेषामिति मु. बौधा.
(५) The two verses are given in the reverse order by the printed Baudhāyana, but शु. प्र. follows the order in the text.
(६) Text corrupt; restored conjecturally.
(७) निहितानाम्—अ. (८) हतानां प्रोक्षणमेव—अ.
(९) एवं क्षुद्रसमिधानाम् । संहतानां तु—अ.

घाते प्रक्षाल्यावशोषणम्[१]। बहूनां तु प्रोक्षणम्। दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामवलेखनम् । उच्छिष्ट[लेपो]पहतानामवतक्षणम्। मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः। तदेतदन्यत्र निर्देशात्। यथैतदग्निहोत्रे घर्मोच्छिष्टे च दधिघर्मे च कुण्डपायिनामयने चोत्सर्गिणामयने च दाक्षायणयज्ञे चैडादधे च चतुश्चक्रे च ब्रह्मौदनेषु च तेषु सर्वेषु दर्भैरद्भिः प्रक्षालनम्। सर्वेष्वेव सोमभक्षेष्वद्भिरेव मार्जालीये प्रक्षालनम् । मूत्रपुरीषलोहितरेतःप्रभृत्युत्सर्गः ॥ मृन्मयानां पात्राणामुच्छिष्टसमन्वारब्धानामवकूलनम्। उच्छिष्टलेपोपहतानां पुनर्दहनम्। मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानामुत्सर्गः। तैजसानां पात्राणां पूर्ववत् परिमृष्टानां प्रक्षालनम्। परिमार्जनद्रव्याणि गोशकृन्मृद्भस्मेति। मूत्रपुरीषलोहितरेतःप्रभृत्युपहतानां पुनः करणम्। गोमूत्रे वा सप्तरात्रं परिशायनम्। महानद्यां वैवम्। एवमश्ममयानाम्। अलाबुबिल्वविनालानां गोवालैः परिमार्जनम्। नलवेणुशरकुशव्यूतानां गोमयेनाद्भिरिति प्रक्षालनम्। व्रीहीणामुपघाते प्रक्षाल्याऽवशोषणम्। तण्डुलानामुत्सर्गः ॥

अग्निहोत्रघर्मैडादधादयः कर्मनामविशेषाः। 'मार्जलीयः' सौमिकवेदेर्दक्षिणतो मध्यप्रदेशः ॥[३]

(१) समाराब्धनां समुल्लेखनम्—अ-

(२) एतदनन्तरं 'मृन्मयानां पात्राणां' इत्यादि 'प्रभृत्युपहतानामुत्सर्गः' इत्यन्तं पठित्वा, 'तदेतदन्यत्र' इत्यादि पठितमुदयपुरमातृकायाम्। 'आ' काशे त्वेवमेव पाठक्रमः। मुद्रितपुस्तकेष्वपीत्थमयमेव क्रमः ॥

(३) 'क्षुद्रसमिधो' अङ्गुलिपरिमिताः अनिध्मा इति यावत्। 'अवलेखनं' घर्षणम् ॥

पैठीनसिः

काष्ठं तृणं चाण्डालादिस्पर्शनादादित्यं दर्शयेत् पूतं भवति ॥

आपस्तम्बः [१, १५, १३–१५]

मूढस्वस्तरे चासंस्पृशन्नन्यानप्रयतान् प्रयतो मन्येत । तथा तृणकाष्ठेषु निखातेषु । प्रोक्ष्य वास उपयोजयेत् ॥[१]

बौधायनः [१, १३, १४–१५]

न परिहितमधिरूढमप्रक्षालितं प्रावरणम् । नाऽपल्पूलितं[२] मनुष्यसंभुक्तं देवत्रा युञ्ज्यात् ॥

'नाऽपल्पूलितं मनुष्यसंभुक्तं' इति, मनुष्ययुक्तवाससं न दैवे संयुञ्जीत ॥

ब्रह्मपुराणे

प्रत्यहं क्षालयेद्वस्त्रं दैवे पित्र्ये च कर्मणि ।
सर्वं विण्मूत्रशुक्रैश्च दूषितं तु मृदम्बुभिः ॥

शोध्यादौ शोधनीयं च गोमूत्रक्षारवारिभिः ।
रज्जुवल्कलपात्राणां चमसानां तु चर्मणाम् ॥

(१) आसनतया शयनतया वा सुष्ठ्वास्तीर्णः पलालादिसङ्घातः 'स्वस्तरः' । पृषोदरादिषु दर्शनाद्रूपसिद्धिः । यत्रातिश्लक्ष्णतया पलालादेः मूलाग्रादिभागो न विज्ञायते स 'मूढः' । मूढश्चासौ स्वस्तरश्च 'मूढस्वस्तरः' । तस्मिन् पतितादिषु 'अप्रयतेषु' आसीनेषु यः कश्चित् प्रयत उपविशेत् न च तान् संस्पृशेत् । तदा स 'प्रयतो मन्येत' । यथा प्रयतमात्मानं मन्यते प्रयतोऽस्मीति तथैवं मन्येत ॥ (उज्ज्वला)

(२) 'पल्पूलितं' हस्तेन शिलायां ताडितत् । (गोविन्दस्वामी)

कृत्वा शौचं ततः शुद्धिर्गोवालैर्घर्षणं पुनः ।
कौशेयाविकयोर्देयं रजताक्तं जलं बहु ॥
सुवर्णाक्तं तथा दद्यात् क्षौमाणां चार्द्रवाससाम् ।

अङ्गिराः

शौचं सहस्ररोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः ।
रेतःस्पृष्टं शवस्पृष्टं आविकं नैव दुष्यति ॥
शयनासनयानानि रोमबद्धानि यानि तु ।
वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षते ॥

'चैलानाम्' इत्यनुवृत्तौ—

शङ्खलिखितौ

सर्वेषामापो मृदिष्टकेङ्गुदबिल्वपत्रतण्डुलसर्षपकल्कक्षारगोमूत्रगोमयादीनि शौचद्रव्याणि । अहतानां प्रोक्षणमित्येके ॥

मनुः [५, १२६[

यावन्नापैत्यमेध्याक्ताद्गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥

विष्णुः [२३, २९]

प्रोक्षणेन [१]संहतानाम् ॥

वसिष्ठः [३, ४८]

लेपगन्धापकर्षणे शौचममेध्यस्यालिप्तस्याद्भिर्मृदा च ॥

मनुः [५, १२८]

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

वृद्धशातातपः

अशुचिं च स्पृशेद्यस्तु एक एव स दुष्यते ।
तं स्पृष्ट्वाऽन्यो न दुष्येत्तु सर्वद्रव्येष्वयं विधिः ॥
संहतानां तु पात्राणां यद्येकमशुचिर्भवेत् ।
तस्यैकस्य भवेच्छौचं नेतरेषां विधीयते ॥

शङ्खः

मलसंयोगजं तज्जं यस्य येनोपहन्यते ।
तस्य तच्छोधनं प्रोक्तं सामान्यं तत्र शुद्धिकृत् ॥

---

# अथात्यन्तोपहतानां शुद्धिः

तत्र विष्णुः [२३, १-६]

शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतम्। अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत्। मणिमयमश्ममयमब्जं च सप्तरात्रं महीनिखनेन। शृङ्गदन्तास्थिमयं तक्षणेन। दारवं मृन्मयं च जह्यात्। अत्यन्तोपहतस्य वस्त्रस्य यत्प्रक्षालितं सद्विरज्यते तच्छिन्द्यात् ॥

'लोहभाण्डं' अत्र तैजसपात्रम्।[१]

हारीतः

अत्यन्तोपहतानां सर्वतैजसानामग्निना शौचम्। मृदारुचर्मणां त्यागः। [२]तन्मात्रच्छेदनं वाससामित्येके। नववाससो धारणं हि शौचमित्याचार्याः। तस्मात् सर्ववाससां प्लावनादेव शुद्धिः ॥

शङ्खलिखितौ

तैजसानां रेतोमूत्रपुरीषोपहतानामावर्तनमुल्लेखनं भस्मना वा सप्तकृत्वः परिमार्जनम्। चेलानामुत्सेधनं तस्मादुच्छेदनं वा ॥

(१) 'लोहभाण्डं' सुवर्णाद्यष्टमयधातुभाजनमिति रत्नाकरः। 'सुरा' गौडी पैष्टी माध्वी त्रिविधा। तदितरत्सुरा मद्यम्। शारीराणि मलानि द्वादशविधानि वसादीनि। (शु. वि., शुद्धिप्रकाशे १२५ च) यथा मनुः [५, १३४]—वसा शुक्रमसृङ्मज्जा मूत्रविट् घ्राणकर्णविट्। श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

(२) From here folio 86, 87 and 88 of आ are lost. A leaf of उ is also missing.

'आवर्तनं' अग्नौ द्रावणम्। तत्र चावर्तनादीनां शुद्धिप्रकाराणां बाहुल्याच्छुचिद्रव्यचिराचिरसंसर्गेण व्यवस्था ॥

बौधायनः [१, ८, ४३–४४]

मूत्रपुरीषासृक्शुक्रकुणपस्पृष्टानां पूर्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्जनम्। अतैजसानामेवंभूतानामुत्सर्गः ॥

'पूर्वोक्तानां' गोशकृद्भस्मनाम्। एवंविधानामत्यन्तोपहतानामद्भिर्मृद्भिश्च प्रक्षालनम्। वासोवदूर्णानाम्। तन्तुबद्धवल्कलानां वल्कलवत् ॥[1]

शङ्खः

मद्यैर्मूत्रपुरीषैश्च श्लेष्मपूयाश्रुशोणितैः।
संस्पृष्टं नैव शुध्येत्तु पुनः पाकेन शुध्यति ॥

एतैरेव च संस्पृष्टं ताम्रसौवर्णराजतम्।[2]
अत्यन्तोपहतानां च परित्यागो विधीयते ॥

तथा

अथ मूत्रपुरीषाभ्यां रेतसा रुधिरेण च।
चेलं यदुपहन्येत पुनः प्रक्षालयेत्ततः ॥

(१) तत्रैवं व्यवस्था—स्पृष्टमात्राणां त्रिःसप्तकृत्वः परिमार्जनम्। अल्पकालापहतानामुल्लेखनम्। चिरकालापहतानां आवर्तनम्। अत्यन्तोपहतानां त्याग इति ॥ (गोविन्दस्वामी)

(२) शुद्धिविवेके (३१) ऽत्राधिकः श्लोकः यथा—"शुध्येदावर्तितं पश्चादन्यथा केवलाम्भसा ॥"

यद्यम्भसा न शुध्येत्तु वस्त्रं चोपहतं ध्रुवम् ।
छेदनं तस्य दाहो वा यन्मात्रं तु प्रदुष्यते ॥
मृत्तिकाङ्गारपातेन अशुद्धं तत्परित्यजेत् ।

बृहस्पतिः [आशौ., ७५]

वस्त्रवैदलचर्मणां शुद्धिः प्रक्षालनं स्मृतम् ।
अतिदुष्टस्य तन्मात्रं त्यजेच्छित्त्वात्मशुद्धये ॥

देवलः

दूषितं वर्जितं दुष्टं कश्मलं चेति लिङ्गिनाम् ।
चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः ॥
शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्यभोज्यपेयानि वर्जितानीह वक्ष्यते ॥
त्यक्तः पतितचाण्डालौ ग्रामसूकरकुक्कुटौ ।
श्वा च नित्यं विवर्ज्याः स्युः षडेते [१]धर्मतः स्मृताः ॥
सव्रणः सूतिका सूती मत्तोन्मत्तरजस्वलाः ।
मृतबन्धुरशुद्धश्च वर्ज्यास्त्वष्टौ स्वकालतः ॥
स्वेदाश्रुबिन्दवः फेनो निरस्तं नखरोम च ।
आर्द्रचर्मासृगित्येतद्दुष्टमाहुर्द्विजातयः ॥
मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवानि च ।
कुणपं पूयमित्येतत् कश्मलं समुदाहृतम् ॥
दूषितैः प्रोक्षणेनापि शुद्धिस्तूक्ता विधानतः ।
दुष्टैर्मार्जनसंस्कारैः कश्मलैः सर्वथा भवेत् ॥



(१) धर्मसम्मताः—अ.

# अथ भूमिशुद्धिः

तत्र मनुः [५, १२४]

संमार्जनेनाञ्जनेन[१] सेकेनोल्लेखनेन च ।
गवां च परिवासेन भूमिः शुध्यति पञ्चधा ॥

यमः

खननात् पूरणाद्दाहाल्लेखनादभिघर्षणात् ।[२]
गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः ॥

देवलः

पञ्चधा वा चतुर्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वाऽपि शोध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपनवापनम् ।
पर्जन्यमार्जनं वेति शौचं पञ्चविधं स्मृतम् ॥[३]

(१) Our manuscripts have उपाञ्जनेन which breaks the metre. Medhātithi's reading is adopted. 'अञ्जनं' गोमयोपलेपनम् (शु. प्र., १००)

(२) अभिमर्षणात् इति शुद्धिप्रकाशपाठः (पृ. १००)

(३) अस्यार्थः—अपवित्रा भूमिः त्रिधा, अमेध्या दुष्टा मलिना च । तत्रामेध्या दहनादिभिः पञ्चभिः बहुत्वे, चतुर्भिः तदल्पत्वे शुध्यति । एवमग्रेऽपि । दुष्टा दहनादिभिः त्रिभिः, खननोपलेपनाभ्यां द्वाभ्यां वा । मलिना एकधोपलेपनेन शुध्यति । वापनं मृदन्तरेण पूरणम् ॥ (शु. प्र., ९९)

प्रसूता गर्भिणी यत्र म्रियते वाऽथ मानुषः ।[१]
चाण्डालैरुषितं यत्र यत्र विन्यस्यते शवः ॥

विण्मूत्रोपहतं यच्च कुणपो यत्र दृश्यते ।
एवं कश्मलभूयिष्ठा भूरमेध्येति लक्ष्यते ॥

कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी ।
द्रप्सापकर्षैः[२]क्षिप्तैश्च दुर्गन्धैर्दुष्टतां व्रजेत् ॥

नखदन्ततनू[३]जन्मरक्तशुक्ररजोमलैः ।
भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥

बौधायनः [१, १३, १६–२०]

घनाया भूमेरुपघात उपलेपनम् । सुषिरायाः कर्षणम् । [४]क्लिन्नाया अमेध्यमाहृत्य प्रच्छादनम् । चतुर्भिः शुध्यते भूमिर्गोभिराक्रमणात् खननाद्दहनादभिवर्षणाच्च । पञ्चमाच्चोपलेपनात् षष्ठात्कालात् ॥

(१) Line missing in उ and शु. प्र. and found in आ.

(२) 'क्षिप्तैर्वातैर्वा दुष्टतां व्रजेत्' इति शु. प्र. पाठः। 'द्रप्सा' घनीभूतं श्लेष्मादिमलम् (शु. बि; शु. प्र.; )

(३) 'तनूजत्वक्तुषपांशुरजोमलैः' इति शु. प्र. पाठः। आ has a large gap hear on.

(४) 'क्लिन्नायां मेध्यं' इति गोविन्दस्वामिनादृतपाठः। 'क्लिन्ना' आर्द्रा। तस्या उपघाते तृणादिना मृदा च प्रच्छादनं कार्यम् इति तेन व्याख्यातम्। "क्लिन्ना अमेध्यार्द्रा अमेध्यमाहृत्य आकृष्य प्रच्छादनं शुद्धमृदन्तरेण पूरणम्" इति शुद्धिप्रकाशेन व्याख्यातं च ॥

याज्ञवल्क्यः [१, १८८]

भूशुद्धिर्मार्जनाद्दाहात् कालाद्गोक्रमणादपि[१] ।
[२]खननोल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥

ब्रह्मपुराणे

देवानां प्रतिमाश्चापि वेश्मान्यायतनानि च ।
बाह्यमभ्यन्तरं शस्तं भूमेरुद्धृत्य शास्त्रवत् ॥

[३]ततस्तोयेन गोभिश्च दाहोल्लेखनमार्जनैः ।
शोधनीयाश्च मन्त्रैश्च सरलैः पञ्चभिश्च भूः ॥
उद्धृत्य मृत्तिकाह्लाव्या पवित्रेण जलेन च ।
ग्रामाद्दण्डशतं त्यक्त्वा नगराच्च चतुर्गुणम् ॥
भूमिः सर्वत्र शुद्धा स्याद्यत्र लेपो न दृश्यते ।

बौधायनः [१, ९, ११-१२.; १, १०, १]

भूमेस्तु सम्मार्जनप्रोक्षणोपलेपनावस्तरणोल्लेखनैर्यथास्थानं दोषविशेषात् प्रायत्यम् । अथाप्युदाहरन्ति ।

गोचर्ममात्रमब्बिन्दुर्भूमेः शुध्यति पातितः ।
समूढमसमूढं वा यत्राऽमेध्यं न लक्ष्यते ॥ इति

(१) 'क्रमणादपि' इति विश्वरूपापरार्कविज्ञानेश्वरैराहतपाठः ।
(२) 'सेकादुल्लेखनाल्लेपात्' इति तैरेवाहतपाठः ।
(३) इमौ श्लोकौ अलवार (अ) कोशमात्रे उपलभ्यन्ते ॥

यमः

ब्राह्मणावसथे भूमिर्देवागारे तथैव च ।
मेध्यां चैव सदा मन्येत् गवां गोष्ठे तथैव च ॥[१]

बौधायनः

अनेकोद्वाह्ये दारुशिले भूमिसमे इष्टकाश्च सङ्कीर्णीभूताः ॥[२]

पराशरः [७, ३४]

रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च ।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टिकचितानि च ॥
[३]वापीकूपतडागेषु उद्यानोपवनेषु च ।
त्रिःसप्तमार्जनं कृत्वा एवं शौचं विधीयते ॥

याज्ञवल्क्यविष्णू [या., १, १९७; वि., २३, ४१]

रथ्याकर्दमतोयानि स्पृष्टान्यन्त्यश्ववायसैः ।
मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥

याज्ञवल्क्यः, [१, १९४]

पन्थानश्च विशुध्यन्ति सोमसूर्यांशुमारुतैः ॥

(१) एतेषु या भूमिस्तां मेध्यां मन्येदित्यर्थः । (शु. प्र., १०१)

(२) 'संकीर्णीभूताः' परस्परसंबद्धाः इत्यर्थः (शु, प्र., १०१)

(३) Ascribed to याज्ञवल्क्य by *S'uddhiprakāsa*, p.101, but found neither in या. nor in पराशरस्मृति. The manuscripts are confused here.

शातातपः

वल्मीकाच्च कराल्लेपात् जलाच्च पथिवृक्षयोः ।
कृतशौचावशिष्टाच्च न ग्राह्याः सप्तमृत्तिकाः ॥[१]

अपां नोच्छिष्टदोषोऽस्ति मधुनो न च सर्पिषः ।
न फलानां न बालानां न चमसां न च योषिताम् ॥[२]

शौचार्थं नैव संग्राह्याः शर्कराश्मादिवर्जिताः ।
रक्ता गौरी तथा श्वेता मृत्तिकास्त्रिविधाः स्मृताः ॥

---

(१) This half-s'loka is given only by अ.

(२) These leaves have perhaps been mixed up, as the s'loka appears later, alongwith the long quotation from Devala below.

# अथोदकशुद्धिः

तत्र मनुः [५, १२८]

आपः शुद्धा भूमिगता [१]वितृष्णा यत्र गौर्भवेत् ।
अव्याप्ताश्चेदमेध्येन गन्धवर्णरसान्विताः ॥

ब्रह्मपुराणे

भूमिष्ठमुदकं शुद्धं गन्धवर्णरसान्वितम् ।
केशास्थिशवविण्मूत्रसंयोगैरुज्झितं यदि ॥

शङ्खलिखितौ[२]

भूमिष्ठमुदकं शुध्येच्छुचि तोयं शिलागतम् ।
गन्धवर्णरसैर्दुष्टैर्वर्जितं यदि तद्भवेत् ॥

विष्णुः [२३, ४३]

भूमिष्ठमुदकं पुण्यं वैतृष्ण्यं[३] यत्र गोर्भवेत् ।
अव्याप्तं चेदमेध्येन तद्वदेव शिलागतम् ॥

(१) 'वैतृष्ण्यं यासु,' इति मेधातिथिपाठः ।

(२) 'शङ्खः' इति शुद्धिप्रकाशे, पृ. १०२

(३) 'वितृष्णा'—अ, आ, उ, शु. प्र., १०२ शु. वि.

यमः

न स्त्री दुष्यति जारेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां न द्विजा वेदकर्मणा ॥
[१]गावो न दुष्यन्त्यमृतं वहन्त्यः
स्त्रियो न दुष्यन्ति परोपभुक्ताः ।
आपो न दुष्यन्ति महीतलस्था
विद्वान्न दुष्येत्तु प्रतिग्रहेण ॥

विष्णुः, [२३, ४४-४६]

मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा ।
अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण शोधयेत् ॥
वह्निप्रज्वालनं कुर्यात् कूपपक्वेष्टकाचिते ।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे ॥
जलाशयेष्वथाल्पेषु स्थावरेषु वसुन्धरे ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥

पराशरः

अल्पेनाऽपि कृताद्दोषात् कूपसेतुपथेषु च ।
तेषु देशेषु यत्तोयं सस्यक्षेत्रपथेषु च ॥
प्रतिग्राह्यं च पेयं च न दुष्येन्मनुरब्रवीत् ।
वापीकूपतडागेभ्य आपो ग्राह्यास्तु सर्वशः ॥

(१) अ alone has this verse in corrupt form, but does not give the name.

पश्चात्पश्येदमेध्यं तु पञ्चगव्येन शुध्यति ॥
अस्थिचर्मावसिक्तं च श्वमार्जारैश्च मूषिकैः ।
दूषितं तु ततस्तोयं तत्राधस्तात्तु शोधनम् ॥

अस्थिचर्मादिपतितं खरवानरसूकरैः ।
उद्धरेत्तूदकं सर्वं शोधनं परिमार्जनम् ॥

वापीकूपतडागेषु दूषितेषु कथंचन ।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुध्यति ॥[1]

अमेध्यं तु यदा किंचित् कूपेषु विनिमज्जति ।
षष्टि कुम्भान् समुद्धृत्य पञ्चगव्येन शुध्यति ॥

## शङ्खलिखितौ

आपो रूपरसगन्धवत्यः परिशुद्धाः । [2]जीर्णचर्मकरण्डैरभ्युद्धृता भूमिगता मेध्या यत्र गौर्वितृष्णा भवेत् ॥

## पैठीनसिः

गन्धवर्णरसयुक्ताः शुद्धा आपो भूमिगता यत्र गौर्वितृष्णा भवति । विपर्यस्तं महोदकमपि ॥

प्रकृताद्रसादन्यरसगन्धादियुक्तत्वेन भूतं 'विपर्यस्तम्' ॥

(१) ७।५.। (२) 'जीर्णचर्मकरण्डकैरुद्धृताः' इति शुद्धिविवेके ; 'चर्मकरण्डकः' चर्मपुटः इति रुद्रधरः ॥

देवलः

अविगन्धा रसोपेता निर्मलाः पृथिवीगताः ।
अक्षीणाश्चैव [१]गोः पानादापः शुद्धतराः स्मृताः ॥

उद्धृता वा प्रशस्यन्ते शुद्धैः पात्रैर्यथाविधि ।
एकरात्रोषितास्तास्तु त्यजेदापः समुद्धृताः ॥

[२]अक्षुब्धानामपां नास्ति प्रसृतानां च दूषणम् ।
स्तोकानामुद्धृतानां च कश्मलैर्दूषणं भवेत् ॥

[३]अक्षोभ्यानि तडागानि नदी वाप्यः सरांसि च ।
कश्मलाशुचियुक्तानि तीर्थतः परिवर्जयेत् ॥[४]

याज्ञवल्क्यः [१, १९२]

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ॥[५]

यमः

प्रापस्त्वरण्ये घटके च कूपे द्रोण्यां जलं कोशगतास्तथापः ।[६]
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्तु ॥

(१) 'नौपालादापः' इति कोशेष्वपपाठः ; शु. प्र., १०२

(२) 'अनुक्तानां मया नास्ति' इति तेष्वपपाठः ।

(३) तत्रायुक्ततडागानि '—उ, अ, आ.

(४) 'अविगन्धा' विगर्हितगन्धरहिताः । 'प्रसृतानां' पर्वतनिर्झररूपाणाम् । कश्मलं' शवादि । 'तीर्थं' जलावतरणमार्गः । (शुद्धिप्रकाशः)

(५) 'प्रकृतिस्थं' अविकृतरूपरसम् । 'महीगतं' विशुद्धभूगतम् ।

(६) 'द्रोणी' काष्ठाम्बुवाहिनी । 'कोशः' चर्मपुट इति कल्पतरुप्रभृतयः (शु. प्र., १०४)

'घटको'ऽत्र सर्वानुगतकूपोदकोद्धरणार्थं प्रकल्पितः करकादिः। 'कोशः' चर्मपुटः। ऋतेऽपि 'शूद्राद्' इति, ब्राह्मणादिस्वामिकमपि तदपेयम् ॥

हारीतः

भूस्थाः पुण्याश्चापोऽशुचिभागवर्जम्। [1]रात्राविता आपो वरुणं प्राविशस्तस्मान्न रात्रौ गृह्णीयात्। धाम्नो धाम्न इत्यग्निमुपरिष्टाद्धारयन् गृह्णीयात् ॥

बौधायनः [१, ६, ११-१३]

अथाऽस्तमित आदित्य उदकं गृह्णीयान्न गृह्णीयादिति मीमांसन्ते ब्रह्मवादिनः। गृह्णीयादित्येतदपरम्। यावदुदकं गृह्णीयात्तावत्प्राणानायच्छेत्। अग्निर्ह वै ह्युदकं गृह्णाति ॥[2]

उशना

नद्यः कूपास्तडागानि सरांसि सरितस्तथा।
असंवृत्तान्यदोषाणि मनुः स्वायंभुवोऽब्रवीत् ॥

'असंवृत्तानि' चाण्डालादिस्पृष्टानि।[3]

(१) 'रात्रेता' इति रुद्रधरपाठः।

(२) तथा च श्रुतिः—आदित्योऽग्निं यन्नक्तमनुप्रविशति सोऽन्तर्धीयते इति। तथा 'रात्रावर्चिरेवाऽग्नेर्ददृशे न धूमः' इति। (गोविन्दस्वामी)

(३) 'असंवृत्तानि' अस्पृश्यस्पृष्टान्यपीत्यर्थ इति कल्पतरुः" इति रुद्रधरः (शु. वि., ३४)

बृहस्पतिः [आशौ., ७७-७८]

उच्छिष्टं मलिनं क्लिन्नं यच्च विष्ठाविलेपितम् ।
अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥

सूर्येन्दुरश्मिपातेन मारुतस्पर्शनेन च ।
गवां मूत्रपुरीषेण शुध्यन्त्याप इति स्थितिः ॥

---

# अथ पक्वान्नशुद्धिः

तत्र मनुः [?][१]

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन ।
प्रक्षालयित्वा निर्दोषान्यापद्धर्मो यदा भवेत् ॥
मसूरमाषसंयुक्तं तथा पर्युषितं च यत् ।
तत्तु प्रक्षालितं कृत्वा भुञ्जीताज्याभिघारितम् ॥

तथा (?) [यमः][२]

मक्षिकाकेशमन्नेषु पतितं यदि दृश्यते ।
मूषकस्य पुरीषं वा क्षुतं यच्चावधूनितम् ॥
भस्मनास्पृश्य चाश्नीयादभ्युक्ष्य सलिलेन वा ॥

अवक्षुतं केशपतङ्गकीटै-
रुदक्यया वा पतितैश्च दृष्टम् ।
[३]अलातभस्माम्बुहिरण्यतोयैः
संस्पृष्टमन्नं मनुराह भोज्यम् ॥

(१) Not traced in *Manusmṛti*. It is cited from 'स्मृत्यन्तर' (i. e. a smṛti) by शु. प्र., १२६.

(२) Ascribed to यम by शु. प्र., १२७ ; शु. वि., ३१.

(३) 'अलातभस्म' शुद्धस्थानभस्मोपलक्षणत् (शु. प्र., शु. वि.)

तथा

वाक्प्रशस्तानि भुञ्जीत वाग्दुष्टानि विवर्जयेत् ।
शुचीनि ह्यन्नपानानि वाक्पूतानि न संशयः ॥

मक्षिका दंशमशका घुणाः सूक्ष्माः पिपीलिकाः ।
[1]एतैः स्पृष्टं न दुष्टं स्यान्नैते कीटा विपत्तये ॥

याज्ञवल्क्यः [१, १८९]

गोघ्रातेऽन्ने तथा केशमक्षिकाकीटदूषिते ।
मृद्भस्म सलिलं वापि प्रक्षेप्तव्यं विशुद्धये ॥

बौधायनः [२, १२, ६]

त्वक्केशनखकीटाखुपुरीषाणि दृष्ट्वा तं देशं पिण्डमुद्धृत्याऽद्भिरभ्युक्ष्य भस्माऽवकीर्य पुनरद्भिः प्रोक्ष्य वाचा च प्रशस्तमुपभुञ्जीत ॥

'अभक्ष्यमित्यनुवृत्तौ वसिष्ठः [२, १४, २२–२४]

पक्वमन्नं केशकीटोपहतं च । कामं तु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनावकीर्य वाचा प्रशस्तमुपभुञ्जीत ॥

पैठीनसिः

केशकीटगवाघ्रातमन्नं हिरण्येन च भस्मना वा स्पृष्टं प्रोक्षितं भोज्यम् ॥

(१) शु. प्र., १२७—आमिषामेध्यसेवी च.

शातातपः

केशकीटगवाघ्रातं[1] वायसोपहृतं [2]तथा ।
क्लीबाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः ॥
दृष्टं वा स्याद्यदन्नं तु तस्य निष्कृतिरुच्यते ।
अभ्युक्ष्य किंचिदुद्धृत्य तद्भुञ्जीत विशेषतः ॥
भस्मना वापि संस्पृश्य संस्पृशेदुदकेन वा ।
सुवर्णरजताभ्यां वा भोज्यं घ्रातमजेन वा ॥
घृतं च पायसं क्षीरं तथैवेक्षुरसो गुडः ।
शूद्रभाण्डगतं तक्रं तथा मधु न दुष्यति ॥
'पायसं' दध्यादि । 'तक्रं' तु तद्विकारः ।[3]

उशना[4]

अजाघ्राणेनऽन्नाद्यानाम् । स्नेहघृतलवणमधुगुडानां पुनः-पाकेन ॥

शङ्खलिखितौ[5]

आकारजानामभ्यवहरणीयानां घृतेनाऽभिघारितानां शुद्धिः । पुनःपचनमेव स्नेहानाम् । स्नेहवद्रसानाम् । मृदद्भिः संहतानाम् ।

(१) 'केशकीटशुना स्पृष्टं' इति शु. प्र. पाठः (१२९)

(२) यत्—शु. प्र.

(३) पायसं दध्यादि, विकारार्थे तद्धितविधानादिति कल्पतरु-पारिजात-रत्नाकरप्रभृतयः । यत्तु दुग्धसाधितमन्नं पायसमिति तन्न ॥ (शु. प्र., १३२)

(४) अ and उ defective and corrupt.

(५) This appears as follows in Govindasvāmin's commentary on Baudhāyana (p. 45): शङ्खः—"आकरजानामभ्युक्षितानां घृतेनाऽभिघारितानामभ्यवहरणीयानां पुनः पचनमेव स्नेहद्रव्यसमानाम् ॥" शु. प्र., १३१

द्रव्यणामुत्पवनम्। शुष्काणामुद्धृतदोषाणां संस्कारः। परिप्लावितानां दोषाणां त्यागः॥

बौधायनः [१, १०, २–३]

परोक्षमधिश्रितस्याऽन्नस्याऽवद्योत्याऽभ्युक्षणम्। तथाऽऽपणेयानां च भक्ष्याणाम्॥

'अवद्योत्य' ज्वलता तृणादिना प्रकाशः॥

आपस्तम्बः [२, ३, ९]

परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत। तद्देवपवित्रमित्याचक्षते॥

सुमन्तुः

केशकीटक्षुतनिष्ठीवनोपहतं श्वभिर्वा घ्रातं प्रोक्षितमात्रम्। दधिपर्युपासितं पुनः सिद्धम्। चाण्डालावेक्षितमभोज्यम्। अन्यत्र हिरण्योदकस्पृष्टाच्छुद्धिः॥

देवलः

चाण्डालेन शुना वापि दृष्टं [१]हरिभिराविकैः।
बिडालादिभिरुत्सृष्टं दुष्टमन्नं च वर्जयेत्॥

(१) रथाग्निकैः—अ

हारीतः[१]

[श्वकाकगृध्रोपघाते] केशकीटपिपीलिकादिभिरन्नाद्युपघाते काञ्चनरजतवैडूर्यप्रवालादिभिरेकतमेन वाऽद्भिः संस्पृष्टेन मन्त्रप्रोक्षणपर्यग्निकरणादित्यदर्शनात्पूतो भवति। बह्वन्नोपघात उपहतप्रदेशात् किंचिदुद्धृत्य स्वर्णरजताम्बुना प्रोक्ष्य पूतं भवति। त्यागो हि रसानामत्यन्तोपहतानाम् ॥

बौधायनः [१, १४, १४–१८]

[एवं] सिद्धहविषाम्। महतां[२] श्ववायसप्रभृत्युपहतानां तद्देशो[३] पिण्डमुद्धृत्य "पवमानस्सुवर्जन"[४] इत्यनेनानुवाकेनाऽभ्युक्षणम्। मधूदके पयोविहारे च पात्रात् पात्रान्तरनयनाच्छौचम्। एवं तैलसर्पिषी उच्छिष्टसमन्वारब्धे तूदके [५]प्रक्षिप्योद्धृत्योपयोजयेत् ॥

एवमित्यादि—अनेन पात्रात् पात्रान्तरनयनमतिदिश्यते। ततोऽधिकविधानमनियतम् ॥

(१) शु. प्र., १२९—"काञ्चनभस्मरजतवैडूर्यगोवालाजिनदर्भाणामन्यतमेनाद्भिः संस्पृष्टमन्त्रप्रोक्षण" इति

(२) महतामिति मु. बौधायनीये; अहित—इति उ.

(३) तं देशं—मु. बौ.

(४) "पवमानस्सुवर्जनः पवित्रेण विचर्षणिः" इत्यादिः 'जातवेदा मोर्जयन्त्या पुनातु' इत्यन्तोऽनुवाकः [तैत्तरीयब्राह्मणम्, १, ४, ८]

(५) अवधायोपयोजयेदिति मु. बौ.

विष्णुः [२३, ३६-३७]

द्रोणाभ्यधिकं सिद्धमन्नमनुपहतं न दुष्यति। तस्योपहतमपास्य गायत्र्यभिमन्त्रितं सुवर्णाम्भः क्षिपेत् ॥

पराशरः

स्मृतद्रोणाधिकं त्वन्नं शुकाद्यैरुपघातितम्।
अत्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत् ॥

वेदवेदाङ्गविद्विप्रा धर्मशास्त्रबहुश्रुताः।
उच्चार्य धर्मशास्त्रं तु ऋषिवक्त्रविनिःसृतम् ॥

मुनिवक्त्रानुगान् धर्मान् गायन्ते धर्मपाठकाः।
एभिर्य उक्तो धर्मो वै सत्यं स्यान्नेतरस्तथा ॥

द्रोणाधिकविशुध्यर्थं धर्मशास्त्रेषु पठ्यते।
श्वकाकैरवलीढं तु द्रोणान्नं न विवर्जयेत् ॥

प्रावृत्योद्धृत्य तन्मात्रं यच्च लालाहतं भवेत्।
सुवर्णोदकेनाभ्युक्ष्य ज्वलनेन तु तापयेत् ॥

हुतज्वलनसंस्पृष्टं तदन्नं न च वर्जयेत्।
तन्मात्रं समनुद्धृत्य शेषं संस्कारमर्हति ॥

घनानां प्रोक्षणाच्छुद्धिर्द्रवाणामपि तापनात्।
स्पर्शनाच्च भवेच्छुद्धिरपोऽग्नेश्च घृतस्य च।
छागलेयमसंस्पृष्टं शुचित्वेनैव निर्दिशेत् ॥

तदेव द्रोणीश्रवणं पक्वान्नप्रदर्शनार्थम्। तथा च 'द्रोणाधिक' मित्युक्तं प्रकृतेषूत्सवेषु ॥

बृहस्पतिः [संस्कार०, २८]

तीर्थे विवाहे यात्रायां सङ्ग्रामे देशविप्लवे ।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥[1]

शातातपः

गोकुले कन्दुशालायां तैलयन्त्रेषु मन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥[2]

हारीतः

कन्दुपक्वं स्नेहपक्वं पायसं दधि सक्तवः ।
[3]एतान्यशूद्रान्नभुजां भोज्यानि मनुरब्रवीत् ॥[4]




---

(१) 'तीर्थादौ' अस्पृश्यस्पर्शने नाचमनस्नानादि । एवं च यत्र स्पर्शे न दोषस्तत्र दर्शनेऽपि सुतरां तथा । अत एव तीर्थादौ श्वकाकादिदर्शनेऽप्यनुपहतत्वमुक्तम् ॥ (शुद्धिप्रकाशः, १३०)

(२) 'अमीमांस्यानि' शौचाशौचतया न विचारणीयानि । 'कन्दुशाला' अत्र 'कुण्डशाला' इति निर्णयामृते । 'कुण्डशाला' यज्ञशाला । 'बालः' पञ्चवर्षाभ्यन्तरवयस्कः ॥ (शुद्धिप्रकाशः, १३१)। तथा शुद्धिविवेके च ।

(३) 'एतान्यशुद्धान्यभुजो' इति अ, आ, उ. । उपर्यादृतः शुद्धिकौमुदी(पृ. ३२०) पाठः।

(४) 'कन्दुपक्वं' उखापक्वं चिपीटकलाजादि । 'पायसं' पयोविकारः, आमिक्षादीति रत्नाकरः । 'अशूद्रान्नभुजां' द्विजानां शूद्रपक्वान्यप्येतानि भोज्यानीत्यर्थः ॥ (शुद्धिकौमुदी)

# अथाऽशुध्यपवादाः

तत्र मनुविष्णू [मनु., ५, १३० ; विष्णु, २३, ४९]

[१]नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
[२]प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥

मनुवसिष्ठशातातपबौधायनाः[३]

वत्सः प्रस्रवणे मेध्यः शकुनिः फलपातने ।
स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥

शङ्खलिखितौ

नारीणां चैव वत्सानां शकुनीनां शुनां मुखम् ।
रतौ प्रस्रवणे वृक्षे मृगयायां तथा शुचि ॥

वसिष्ठः

श्वहताश्च मृगा धन्याः पातितं च [४]मृगैः फलम् ॥
बालैरनुपरिक्रान्तं स्त्रीभिराचरितं च यत् ॥

(१) शुचिरास्यं रतौ स्त्रीणां—अ, and उ ; आ as above.

(२) स्त्रीमुखं रतिसंसर्गे श्वा मृगग्रहणे शुचिः—उ, अ.

(३) मनु, ५, १३० ; वसिष्ठ., २८, ८ ; बौधायन, १, ९, २.

(४) 'द्विजैः' इति शु. प्र. पाठः, १०८ 'स्त्रियश्च स्वभार्या एव' इति रुद्रधरः.

**मनुः** [५, १३१]

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
[1]क्रव्याद्भिश्च हतस्यान्यैश्चाण्डालाद्यैश्च दस्युभिः ॥

**यमः**

बालकैर्यत्परिक्रान्तं स्त्रीभिराचरितं च यत् ।
मशकैर्मक्षिकाभिश्च [2]विलीनं नोपहन्यते ॥

निर्दोषं तु मुखं स्त्रीणां गवां पृष्ठमजामुखम् ।
एतानि नित्यशुद्धानि यच्च वाचा प्रशस्यते ॥

**तथा**

आत्मशय्यासनं वस्त्रं नित्यं शुद्धं च बालकम् ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ॥

आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरम् ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥

गौरश्वो[3] विप्रुषश्छाया मक्षिकाः शलभाः शुकाः ।
अजो हस्ती रणे छत्रं रश्मयश्चन्द्रसूर्ययोः ॥

(१) 'क्रव्याद्भिः' व्याघ्रादिभिः इति रुद्रधरः

(२) 'विलीनं' आक्रान्तम् इति रुद्रधरः

(३) त्रिपुरुषः—आ.

भूमिरग्निरजो वायुरापो दधि घृतं पयः ।
सर्वाण्येतानि शुद्धानि [१]दश मेध्यानि नित्यशः ॥

तथा

शुचिरग्निः शुचिर्वायुः पवित्रा ये बहिश्चराः ।
आपश्च शुचयो नित्यं पन्थाः संचरणात् शुचिः ॥

तथा

आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता ।
शुचिर्धर्मपरो राजा संतुष्टो ब्राह्मणः शुचिः ॥

विष्णुः [२३, ४८]

नित्यं शुद्धः कारुहस्तः[२] पण्यं यच्च प्रसारितम् ।
ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व एव च ॥

सुमन्तुः

स्त्रीबालमशकमक्षिकाछायासनशय्याविप्रुषो नित्यं मेध्याः । घृतघटफलागाराणामभोज्यान्नानामदोषः ॥

अभोज्यान्नानामपि घृतघटादयो न दुष्टा इत्यर्थः ।[३]

(१) स्पर्शमेध्यानि—आ.

(२) 'कारूणां' सूपकारादीनाम् इति वैजयन्ती । 'कारुः' शिल्पीति रुद्रधरः ।

(३) The comment is repeated by रुद्रधर

शङ्खलिखितौ[1]

शुद्धं नदीगतं तोयं सर्व एव तथाकराः ।
शुद्धं प्रसारितं पण्यं शुद्धमश्वो जयोन्मुखः ॥
मुखवर्जं च गौः शुद्धा [2]मार्जारश्च क्रमे शुचिः ।

बृहस्पतिः [आचार॰, ७६]

स्त्रियो बालाश्च वृद्धाश्च न दुष्यन्ति कदाचन ।
मक्षिका विप्रुषो नारी भूमिरापो हुताशनः ॥
मार्जारश्चैव दर्वी च मारुतश्च सदा शुचिः ।

उशना

कारुहस्तः शुचिर्नित्यं पण्यं यच्च प्रसारितम् ।
आकराः सोमपानं च वाचा यच्च प्रशस्यते ॥

बौधायनः [१, ९, ३]

[3]अदूष्या सन्तता धारा वातोद्धूताश्च रेणवः ।
आकराश्शुचयस्सर्वे वर्जयित्वा सुराकरम् ॥

(१) 'शङ्ख' इति शुद्धिप्रकाशे, ११०, शुद्धिविवेके (८८) च

(२) राजा यश्च—उ, अ.

(३) अदृश्या—उ, अ; अदूष्या—आ, मु. बौधा.; 'अदुष्टा' इति हरदत्ताद्दृतपाठः।

शातातपः

रेणवः शुचयः सर्वे वायुना समुदीरिताः ।
अन्यत्र [१]रासभाजाविश्वसमूहनिवाससाम् ॥
[२]'समूहनी' मार्जनी ।

बौधायनः [२, ६, ३३-३४]

पुररेणुकुण्ठितशरीरस्तत्परिपूर्णनेत्रवदनश्च । नगरे वसन् सुनियतात्मा सिद्धिमवाप्स्यतीति न तदस्ति ॥

शातातपः

अपां नोच्छिष्टदोषोऽस्ति मधुनो न च सर्पिषः ।
न फलानां कृषीमानां नाकरणां न योषिताम् ॥

देवलः

शुचि पूतं स्वयं शुद्धं पवित्रं चेति केवलम् ।
मेध्यं चतुर्विधं लोके प्रजानां मनुरब्रवीत् ॥

तथा

नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते ।
शुद्धं पवित्रं पूतं च शुद्धमित्यभिधीयते ॥

स्वयमेव हि यद्द्रव्यं केवलं [३]मेध्यतां गतम् ।
स्थावरं जङ्गमं वापि स्वयंशुद्धमिति स्मृतम् ॥

(१) 'राजाश्वगज'—उ, अ, आ.
(२) Repeated by Rudradhara
(३) धनतां गतम्—शु. प्र., १११.

अन्यद्रव्यैरदूष्यैर्[1]यत् स्वयमन्यानि शोधयेत् ।
हव्यकव्येषु पूज्यं यत्तत्पवित्रमिति स्मृतम् ॥

अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ।
अवर्ज्यभक्ष्यजातानि शुचीन्येतानि केवलम् ॥

वर्जिते निर्मले द्रव्ये शुचिसंज्ञा प्रवर्तते ।
तस्मिन्नेवेह कर्मण्ये पूतसंज्ञा प्रवर्तते ॥

तस्माच्छुद्धं तु कर्मण्यं शुचीत्याहुर्द्विजातयः ।
निर्मलं संस्कृतं द्रव्यं क्रियार्हं पूतमुच्यते ॥

वसतिश्चमसो यानं वाहनं साधनानि च ।
[2]क्षुरो नौरासनं चेति स्वयंशुद्धमिति स्मृतम् ॥

[3]शिशवश्च स्वयंशुद्धा योषितश्चानृतौ तथा ।
[4]ब्राह्मणो ऋतुकालेषु नारीभिर्नैव स्पृश्यते ॥

आकराश्च स्वयं शुद्धा द्रव्याणामिति निश्चयः ।
क्रीतं च व्यवहारिभ्यः पण्यं शुद्धमिति स्मृतम् ॥

अदुष्टं वाक् प्रशस्तं च स्वयं शुद्धं च केवलम् ।
त्रीण्येतानि विशुद्धानि भगवान्मनुरब्रवीत् ॥

(१) दृश्ये च यत्—अ ; दुष्टैर्यत्—उ.

(२) चक्षुरालोकनं चेति—उ ; क्षुबालो वासन चेति—अ.

(३) उ drops a quarter verse here.

(४) उ—ब्राह्मणः ऋतुकाले तु नारीभिः न च दृश्यते । अ—न स्पृश्यते ॥ 'ब्रह्महत्या हि नारीणां ऋतुकाले न संस्पृशेत्' इति शु. प्र., ११२.

अजाश्वं मुखतो मेध्यं[१] गावो मेध्याश्च पृष्ठतः ।
तरवः पुष्पिता मेध्या ब्राह्मणश्चैव सर्वतः ॥

[१]तस्मात् क्षौद्रं सुवर्णं च सदर्भाः कुतपास्तिलाः ।
अपामार्गः शिरीषं च पद्ममामलकं मणिः ॥

माल्यानि सर्वगा दूर्वाः सभद्राश्च प्रियङ्गवः ।
अक्षता सिकता लाजा हरिद्रा चन्दनं यवाः ॥

पलाशखदिराऽश्वत्थतुलसीधात्रिकीटजाः ।
एतान्याहुः पवित्राणि यज्ञार्थे हव्यकव्ययोः ॥

पौष्टिकानि मलघ्नानि शोधनानि च देहिनाम् ।
तेषामग्निः सकृन्मृच पवित्राणि विशेषतः ॥

सर्वाशौचविशुध्यर्थं सर्वेषां सर्वतः सदा ।
अकश्मलैः समिद्धोऽग्निर्दुमनुष्यैरदूषिताः ॥

सर्वेषामप्यशौचानां समर्थः शोधनाय सः ।
द्रव्याणामग्निदग्धानां मेध्यत्वमुपदिश्यते ॥

ज्वालाभिः स्पृष्टमात्राणां शुचित्वं नियतं भवेत् ।
अग्नेर्वृषलभुक्तस्य ग्रहणं नास्त्यनापदि ॥

श्वपाकवृषलौ भोक्तुं ब्राह्मणाग्निं च नार्हतः ।
चाण्डालाग्नेरमेध्याग्नेर्मृतकाग्नेश्च कर्हिचत् ॥

(१) Five s'lokas beginning with this are missing in the Alwar manuscript, अ.

पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्।
गोशकृच्छुद्धदेशस्थं श्मशानादुद्धृतं शिवम् ॥

अग्राम्या मृद्भवेच्छुद्धा शुक्रविण्मूत्रवर्जिता।
एतानि तपनाशुद्धापवादाः।

अथ मनुविष्णू [मनु, ५, १३२; विष्णु, २३, ५१]

ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः।[१]
यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥

बौधायनः [१, १०, १८–१९]

नाभेरधःस्पर्शनं कर्मयुक्तो वर्जयेत्। "ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यम्" इति श्रुतिः[२] ॥

उशना

ऊर्ध्वं नाभेः पुरुषः। गौर्मेध्या च पृष्ठतः। मुखादजः। स्त्रियः सर्वतः। हृदयमासामशुचि ॥

(१) 'निर्दिशेत्' इति मु. विष्णुस्मृतिपाठः

(२) ज्योतिष्टोमे दीक्षाप्रकरणे यजमानस्य मेखलाबन्धनविधिसमीपे श्रुतोऽयमर्थवादः। कटिप्रदेशे बद्ध्या मेखला। तस्यां च बद्धायां शरीरे मेध्यामेध्ययोः स्थानयोः विभागो भवति। नाभ्यै इति षष्ठ्यर्थे चतुर्थी ॥ (चिन्नस्वामिशास्त्रिणः, बौधायनधर्मसूत्रम्, ४८)

यमः

मेध्याऽ[१]रजोगता नारी स्त्रीमुखेषु च वारुणी ।
स्पर्शनेन[२] न दुष्यन्ति [३]वातो गन्धरसाः स्त्रियः ॥

स्त्रीणां मुखरसश्चैव गन्धो निःश्वास एव च ।
मुखतो गौरमेध्या स्यान्मेध्योऽजो मुखतः स्मृतः ।
पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा ॥

नृणां मूत्रपुरीषे तु अमेध्ये मल एव च ।
गोमूत्रं च पुरीषं च नित्यं मेध्यमिति स्थितिः ॥

बृहस्पतिः [संस्कार, २७९]

पादौ शुची ब्राह्मणानामजाश्वानां मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषिताम् ॥

[आशौ., ६२-६५]

रोमोद्भेदे शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
[४]सूर्यश्चैव रजोयोगे कन्यां भुङ्क्ते च पावकः ॥

बलात्कारोपभुक्ता वा चोरहस्तगतापि वा ।
स्वयं विप्रतिपन्ना वा अथवा विप्रमादिता ॥

(१) रहोगता—शु. प्र., ११२
(२) स्पर्शनेन—शु. प्र., ११२
(३) वातो गन्धरसाः स्त्रियः—शु. प्र, ११२; वातस्तेजः सदैव हि—उ.
(४) अनलश्च—शु. प्र.

[१]अत्यन्तदूषितापि स्त्री न परित्यागमर्हति ।
सर्वेषां निष्कृतिः प्रोक्ता नारीणां तु विशेषतः ॥

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि [२]रजस्तासां दुष्कृतान्यपकर्षति ॥

सोमः शौचं [३]ददात्यासां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥[४]

यमः[५]

न स्त्री दुष्यति जारेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां न द्विजा वेदकर्मणा ॥

गावो न दुष्यन्त्यमृतं वहन्त्यः
स्त्रियो न दुष्यन्ति परोपभुक्ताः ।
आपो न दुष्यन्ति महीतलस्था
विद्वान्न दुष्येत्तु प्रतिग्रहेण ॥

(१) अन्यतो दूषितापि—शु. प्र., ११२

(२) रजस्तासां—शु. प्र.; रजःस्नाता—उ.

(३) ददौ तासाम्—शु. प्र.

(४) एतच्च मानसविषयमेव । "न स्त्री दुष्यति जारेण" इति वाक्यं च तथा । 'निष्कृतिः' प्रायश्चित्तम् ।

(५) The first S'loka is wrongly ascribed by Rudradhara to Yājñavalkya.

याज्ञवल्क्यः, [१, ७१–७२]

सोमः शौचं ददावासां गन्धर्वश्च शुभां गिरम् ।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥

व्यभिचाराहृतौ शुद्धिर्गर्भे त्यागो विधीयते ।
गर्भभर्तृवधादौ च तथा महति पातके ॥

यमः

बलात्कारोपभुक्ता या चोरहस्तगतापि वा ।
कन्दर्पमदमूढा वा यदि वा मद्यमोहिता ॥

स्वयं विप्रतिपन्ना वा यदि वा विप्रमादिता ।
ऋतुकाले तु शुध्येत्तु धर्मापेता च या भवेत् ॥

शुध्येत्तु रजसा नारी [१]नदी वेगेन शुध्यति ।
पुष्पकालमुपासीना पुंसा सह विशुध्यति ॥

शङ्खलिखितौ[२]

न वै स्त्रीणां व्रतं न मन्त्रक्रिया न कार्यमिति प्रजापतिः । पाणिगृहीती सन्तानार्थिना परैरवकीर्णा न दुष्यतीति ऋषिवादः । ता ह्यार्तवेन शुध्यन्ति । न ह्यन्तर्वत्नी शुध्यतीति वैवस्वतः ।

(१) नदी वेगवती यथा—आ.

(२) Supplied by अ and आ ; omitted by उ.

तस्या आर्तवेन च शुध्या असंभवात्। कामानुषगमप्रवृत्तिरकार्यमिति हारीतः। तद्भूतत्वादात्मसंभवाच्च दोष इति गौतमः। चान्द्रायणमासां पावनमित्याचार्याः। प्राजापत्यो वा ॥

हारीतः

गर्भघ्नीमधोवर्णगां शिष्यसुतगामिनीं पानव्यसनासक्तां धनधान्यक्षयकरीं वर्जयेच्च व्यभिचारिणीम्। व्यभिचारिणी रजसा शुध्यतीत्येके। [१]त्यक्तभोगान्न परैरस्पृज्य न दुष्यतीत्यन्ये।

सोमो ददौ शौचमासां गन्धर्वाः शिक्षितां गिरम्।
अग्निश्च सर्वभक्ष्यत्वं तस्माच्छुद्धतमाः स्त्रियः ॥

इत्यपरे ॥

शङ्खलिखितौ

एकव्रतस्कन्नभावत्वात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति ॥

यमः

स्वच्छन्दापि हि या नारी तस्यास्त्यागो विधीयते।
न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्तनम् ॥

(१) Continuation in आ.

स्वच्छन्दव्यभिचारिण्या विवस्वान् त्यागमब्रवीत् ।
न बन्धनं न वैरूप्यं वधं स्त्रीणां विवर्जयेत् ॥

**वसिष्ठः**

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

[१]'जुङ्गितो' निन्दितः ।

[२]इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेव-
महासान्धिविग्रहिकेण भट्टहृदयधरा-
त्मजेन श्रीमल्लक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ शुद्धिकाण्डः
समाप्तः ॥[३]

---

(१) 'जुङ्गितो' निन्दितः शूद्रादिः इति रुद्रधरः

(२) इति भट्टश्रीलक्ष्मीधरेण विरचिते कृत्यकल्पतरौ शुद्धिकाण्डं समाप्तम् (उ)

(३) संवत् १४४६ समय पौषशुद्धि, १४ शनौ । नारायणेत्यादि बि + + दरन्तराबिविभ्राज-मानमहानृपतिश्रीमद्रामसिंहदेवभुज्यमानराज्ये द्विजचरणकमलनिरतेत्यादिसंस्तूयमानशुक्ल .... .... .... कनकत्वरकुलालंकृतसत्पण्डितश्रीनिकाजुकेन व्यलिखि । शुभमस्तु ॥

# APPENDIX A

*Index of Smṛti-authors cited*

---

# APPENDIX B

## *Index of Vedic Works cited*



---

# APPENDIX C

## *Index of Puraṇas cited.*



---

# APPENDIX D

## *Index of Authors and Works cited in the Footnotes.*

---

# APPENDIX E

## *Index of Half-verses*